# व्याप्तिपञ्चकं सिंहव्याघ्रलक्षणञ्च

सटीकया माथुर्या जागदीश्या च शोभितम्

शुद्धाद्वैत (पदार्थ) मणिमालया च

समलङ्कृतम्



टीकाकारः

आचार्य पं० श्यामसुन्दर झा

गौतमावतार-श्रीगङ्गेशोपाध्यायविरचितम्—

# व्याप्तिपञ्चकं सिंहव्याघ्रलक्षणञ्च

श्रीमथुरानाथतर्कवागीशकृतया माथुर्या श्रीरघुनाथशिरोमणि-
विरचितया दीधित्या श्रीजगदीशतर्कालङ्कारनिर्मितया
जागदीश्या च शोभितम्

तच्च

सुरतहिन्दूगुरुकुल-संस्कृतमहाविद्यालयप्रधानाध्यापक-न्यायवेदान्ताचार्य-
पं० श्रीश्यामसुन्दर झा विरचितया
चन्द्रिकया, शुद्धाद्वैत ( पदार्थ ) मणि-
मालया च समलङ्कृतम्

—❀—

सम्पादकः—
न्यायवेदान्तव्याकरणाचार्यः-
पं० श्रीरुद्रधर झा
काशीहिन्दूविश्वविद्यालयीयन्यायाध्यापकः

—❀—

सं० २०१४ ] मूल्यं २) [ ई० १९५७

# समर्पणम्



विद्वद्भिर्मिथिला पुरी परिचिता, ठाढ़ी च तत्र स्थिता;
तत्र श्रीगणनाथपूजनपरः शास्त्रार्थजेता सदा ।
न्याये गौतमकल्प एव कथितः श्रीविश्वनाथः सुधी-
स्तत्सूनुः सदसद्विवेकचतुरो दामोदराख्यो बुधः ॥ १ ॥

गाम्भीर्ये सरसाम्पतिं परिजयन् ज्ञाने समं लज्जयन्;
धर्माचारपराङ्जनान् विरचयन् भक्त्या शिवन्तोषयन् ।
योऽसौ मानसमन्दिरे विजयते तस्मै नमः पूर्वक-
न्तच्छात्रेण समर्प्यते कृतिरियं श्रीश्याम० नाम्ना मया ॥ २ ॥

( श्रीश्यामसुन्दरशर्मणा )

# प्रस्तावना

अथ विदितमेव समेषां युक्तायुक्तविचारशालिनां विदुषामान्वीक्षिकीति प्रथितस्य न्यायशास्त्रस्यैहिकामुष्मिकविषयेषु परमोपयोगित्वम् । उक्तञ्च—प्रथमसूत्रभाष्यान्ते वात्स्यायनमुनिना—सेयमान्वीक्षिकी—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥ इति

त्रयीमारभ्याष्टादशसु विद्यास्थानेषु मोक्षसाधनपरमेशाधिगमोपायोपासनरूपतया, परोक्षार्थस्यापि निर्णायकतया चास्य शास्त्रस्य प्राधान्यं वरीवर्ति । यद्यपि प्रमाणप्रमेयादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इत्युक्तं प्रथमसूत्र एव मुनिना, तथापि परेशोपासनामन्तरा तादृशज्ञानानुदयात्तदुपासनाया मोक्षोपयोगित्वम् 'आत्मेत्येवोपासीत, आत्मानमेव लोकमुपासीत, भजति सोऽमृतो भवती'त्यादिश्रुतिवाक्यवृन्दैर्निर्णीतं युक्तमेव । अत एव—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ इति

स्वजन्मसकललोकमणीकृतमिथिलामहीमण्डलोदयनाचार्यकृतकुसुमाञ्जलिस्थपद्येन श्रवणानन्तरागतस्य—'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति' श्रुत्युक्तमननस्योपासनाऽपरपर्यायताऽवसीयते । तच्च मननम्—'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्वा च सततं ध्येय एते दर्शनहेतवः' इति प्रामाण्यादुपपत्तिनिर्णयरूपं न्यायदर्शनपदार्थपरिशीलनजमित्यवगम्यते ।

'यदक्षपादः प्रवरो मुनीनामि'ति वार्तिककृदुक्त्या ऋषिप्रवराक्षपादापरनामधेयगौतममुनिहृदयनिःस्यन्दामृतायमानन्यायदर्शनसूत्रसन्दोहप्रवाहः संसारसागरनिमग्नसहृदयहृदयमानवजातचेतांस्यमृतीभावपथप्रदर्शनेनाप्याययति नितरां निरन्तरम् ।

अस्य च न्यायशास्त्रस्य पथा मैथिलान्वयक्षीराब्धिसम्भूतो भुवनविवरविसारि-यशोराशिर्विद्वत्कुलचूडामणिगङ्गेशोपाध्यायश्चिन्तामणिमिव तत्त्वचिन्तामणिग्रन्थ-रत्नं रचयामास। सोऽयं नव्यन्यायनाम्नाऽभिधीयते। तत्र न्यायशब्दस्य यद्यपि-नीयते परमात्मसमीपं प्राप्यते येनेति न्यायः, प्रमाणैरर्थपरीक्षणं न्याय इत्याद्यने-कार्थः सम्पद्यते तथापि न्यायो नामावयवसमुदाय इत्यर्थ एवानुमानखण्डमधि-कृत्य शास्त्रीयपरिभाषारूपतया प्रकृतोपयुज्यमानतया च युक्तियुक्तः प्रतीयते।

पुरा तत्त्वचिन्तामणिग्रन्थस्य व्याख्याकर्तृत्वं प्रकाण्डपाण्डित्यसूचकमासीदिति शतशः सहस्रशो वाऽद्यावध्यस्य ग्रन्थरत्नस्य किरणायमानेषु आलोकादिव्याख्या-नोपव्याख्यानेषु न्यायदर्शनतत्त्वज्ञानपारावारीणरघुनाथशिरोमणिकृतदीधिति-व्याख्यानं विशेषतः प्रचलितं शोभते। तर्कतर्कणप्रवणमथुरानाथतर्कवागीशेनापि कृता रहस्याख्या प्रसादबहुला व्याख्या तत्त्वचिन्तामणिकिरणततिमातनोति।

दीधितेरपि बहुषु व्याख्यानेषु जगदीशतर्कालङ्कारकृतं गदाधरभट्टाचार्य-कृतञ्च व्याख्यानं न्यायनयज्ञैः समाद्रियमाणं नितरां चकास्ति।

तत्र मदीयशिष्यान्यतमतामप्यावहता न्यायवेदान्ताचार्येण सुरतनगरस्थहिन्दु-गुरुकुलसंस्कृतविभागप्रधानाध्यापकेन निजसौजन्यवशीकृतसकलान्तःकरणेन पं० श्रीश्यामसुन्दरझाशर्मणा बहु परिश्रम्य विरचिता व्याप्तिपञ्चकस्य माथुर्या जागदीश्याश्च सिंहव्याघ्रलक्षणस्य च जागदीश्याश्चन्द्रिकाख्या व्याख्याऽल्पश्रमेण व्याप्तिभागमधिगन्तुं प्रयतमानानां विषयान्तरविदुषाञ्छात्राणाञ्चोपकृतयेऽवश्यं समर्था स्यादित्याशास्ते—

लक्ष्मीनाथ झा
दर्शनविभागाध्यक्षः
हिन्दूविश्वविद्यालयः काशी

वै० कृ० एकादशी वि. सं. २०१४

# निवेदनम्

यद्यप्यमलधवलकीर्तिज्योत्स्नाततिधवलितदिग्दिगन्तरासंख्यातसुगृहीतनामधेयविद्वद्वरेण्योपगुम्फितसहृदयहृदयहारिविविधव्याख्यानोपव्याख्यानोपशोभिते व्याप्तिभागस्य मथुरानाथतर्कवागीश—जगदीशतर्कालङ्कारकृतव्याख्याने को नामाहं तद्व्याख्याने, तथापि—अतिगंभीरतया तेषु कियन्ति विद्वद्भोग्यत्वं कियन्ति च व्युत्पन्नभोग्यत्वमासादयन्ति दरीदृश्यन्ते। यदि नाम सम्प्रति कलिकालकवलिते घोरेऽस्मिन् पाश्चात्यशिक्षाबहुले काले दैनन्दिनं ह्रसमानमेव संस्कृताध्ययनमवलोक्यते, किमुत तर्ककर्कशनव्यन्यायातिगहनव्याख्यानाध्ययनरुचिरित्यध्यात्मतत्त्वरत्नसमासादनलिप्सूनां शास्त्रान्तरव्युत्पित्सूनाञ्च न्यायशास्त्रोदधिप्रविविक्षूणामन्तेवसतां तत्र प्रवेशसौलभ्याय सोपानायमानेयं पंक्त्यक्षरानुसारिणी विषमस्थलेषु लक्ष्यलक्षणसंघटनपथोपदर्शनपुरस्सरा नातिसंक्षिप्तविस्तरा, मत्कृतिविषयतावती, व्याप्तिपञ्चकमाथुरीजागदीश्योः सिंहव्याघ्रलक्षणजागदीश्याश्च चन्द्रिकानाम्नी सरलव्याख्या यद्यल्पीयसीमप्युपकृतिं तेषामादधती स्यात्तदैतद्ग्रथनप्रकाशनाद्यायासजातं सफलीभूतं मंस्ये।

सा चेयमखिलमहीमण्डलमण्डनवैश्वानरावतारश्रीमद्वल्लभाचार्यान्वयक्षीराब्धिप्रकटितकौस्तुभरत्नायमान—शुद्धाऽद्वैतसुधाप्रदानभुवनविवरविसारिविमलयशोराशि–प्रवचनकलाकुमुदिनीकलाकर—श्रीमद्भागवतादितत्त्वरसपानरसिक-न्यायवेदान्तादिशास्त्रवैदुष्यसमुल्लसितसदाचारशालि—सौजन्यवदान्यतादिमलयजाप्यायितसज्जनमानस-वाग्देवीसमाश्रयसूर्यपुर ( सुरत ) स्थषष्ठपीठाधिष्ठित-गोस्वामिवर-श्रीमद्व्रजरत्नलालजीमहाराजमहानुभावानामात्मजातजन्मनः, सत्सौजन्यनिकेतन-परम्परागताचारानुष्ठानतत्पर-पुष्टिमार्गरहस्याभिज्ञ-गोस्वामिकुलभूषणश्रीमन्मधुसूदनलालराजाजीमहोदयतनयस्य, अल्पेऽपि वयसि स्वपरसमयसमालोचनकलासमासादितसत्समयसमुल्लसितचेतसो गोस्वामिकुलदीपकस्य श्रीमन्मथुरेशजीबाबाशुभोदयस्योदाराशयेन लोकलोचनगोचरतामुपगता चन्द्रिका

जिज्ञासुजनमानसतामसावरणापनोदनपरा स्यादित्याशासानो मनसा तदुपकृति-मङ्गीकरोमि ।

अथ च तार्किककुलचूडामणि-त्वरितप्रस्फुरितसत्कल्पनाकमनीयकान्तस्य, सकलसमितिवादिविजयवैजयन्तीसमनन्दितविद्वन्नृपतिसुहृच्चक्रचक्रवालस्य, लक्षणा-वलीप्रकाश—सिद्धान्तसारादिविविधसद्ग्रन्थविवेचनरचनदिग्दिगन्तविस्तारिविमलय-शोराशेः, वादीभपञ्चाननापरगौतमावतारझोपनामश्रीमद्विश्वनाथशर्म्मणः पौत्रेण, सन्ततश्रौतस्मार्तकर्मानुष्ठाननिरलस्य, सुतनिर्विशेषं मादृशशिष्येषु, आत्मनि-र्विशेषं बन्धुषु च समुदाचरतः, द्वन्द्वैर्मुक्ता गृहेष्वपीति व्यासपादोक्तिमन्वर्थीकृत-वतोऽस्मद्गुरुवरपू. श्रीमद्दामोदरझाशर्म्मणस्तनयेन, मन्निर्देशाध्ययनपथारूढेन प्रवचनशास्त्रार्थलेखनादिलब्धकीर्तिकलापेनानेकसद्ग्रन्थटीकादिसमलङ्कृतवाग्देवी-मन्दिरेण लब्धस्वर्णपदकव्याकरणन्यायवेदान्ताचार्येण वाराणसेयहिन्दूविश्वविद्या-लयीयन्यायाध्यापकपदमलङ्कुर्वता झोपनामपं०श्रीरुद्रधरशर्म्मणैतत्सम्पादनस-म्बन्धिसंशोधनादिसर्वविधभारवहनेनोपकृतोऽहमिति प्रसन्नमनास्तं शुभाशिषां राशिना नन्दयामि ।

चन्द्रिकान्ते प्रणामपुष्पाञ्जलिना पूजितानान्तेषां गुरुवराणां पादपद्मरजांसि स्मृतिपथमानये, यत्कृपालवलेशेनैतल्लेखनप्रकाशनादिक्रियाकलापसाफल्यमासादि-तवानस्मि । यदत्र साधु तत्तेषां, यच्चासाधु तन्मद्बुद्धिप्रमादादायसाक्षरसंयोज-कदोषेण वा सञ्जातमिति विज्ञाय गुणैकपक्षपातिनः कृतधियो विद्वांसः सहृदयप्रियसुहृदश्च न्यूनातिरेकादिजास्त्रुटीः संशोध्य सफलयन्तो मे परिश्रमं क्षाम्यन्तश्च प्रमादान् विबोधयिष्यन्ति मां येनानुकूलसमये तत्प्रतिविधानं स्यादित्या-शासमन्वितः कृताञ्जलिरभ्यर्थयते—

वै० कृ० एकादशी
सं० २०१४

विदुषां विधेयः
श्रीश्यामसुन्दरझा

॥ ॐ ॥

# अथ शुद्धाद्वैत ( पदार्थ ) मणिमाला



नवीननीरदश्याम आद्यशक्तिविद्युदुल्लसद्देवः ।
अभिवृष्य कृपाऽमृतं नु त्रिविधतापमपाकरोतु नः ॥ १ ॥
यत्कृपालेशमात्रेण भवभीतिर्निवर्तते ।
स्वीयानां तन्नुमः श्रीमदाचार्यपदपंकजम् ॥ २ ॥
अध्यात्मविद्यासु निबद्धवृत्तीनेकात्मना चिन्तितदेव-मूर्तीन् ।
अस्मासु वै सन्ततमार्द्रदृष्टीन् गुरूनमामोऽखिलदेवमूर्तीन् ॥ ३ ॥
तत्त्वजिज्ञासुभिः सम्यगन्वयव्यतिरेकतः ।
विजिज्ञास्यन्तदेवास्ति यत्सर्वत्र सदा स्थितम् ॥ ४ ॥
तस्मिंश्च तत्त्वतो ज्ञाते विज्ञायतेऽञ्जसाऽखिलम् ।
"येनाश्रुत" मिति श्रुत्या व्यासैश्चापीरितं यथा ॥ ५ ॥
"एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा,, ॥ ६ ॥
एताभ्यां शोध्यते तत्त्वं नेतरा सरणिः स्फुटा ।

तथा हि—

परिवर्तिनि जगत्यस्ति सर्वदैकरसं हि सत् ॥ ७ ॥
घटादेः परमाण्वन्तं प्रसिद्धं कारणात्मकम् ।
"विशेषबुद्धेर्विवरं मनाक्च पश्यामि यन्न व्यवहारतोऽन्यत्" ॥ ८ ।
इति भागवतेऽप्युक्तं विश्वस्य त्रयसंयुतम् ।
उपलम्भस्ततोऽप्यस्ति सदंशस्य निरन्तरम् ॥ ९ ॥
"अस्तीत्येवोपलब्धव्य,, इति श्रुत्या तदीरितम् ।
शुद्धं ब्रह्म तदेवास्ति श्रुतिसूत्रादिसम्मतम् ॥ १० ॥

तदुक्तम्—

"मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः ।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्" ॥ ११ ॥

आनन्दांशतिरोभावे त्वस्यांशो जीव उच्यते ।
चिदानन्दतिरोभावे जडत्वमुपजायते ॥ १२ ॥
आविर्भूतत्रयांशत्वे चास्यान्तर्यामिता मता ।
ऐश्वर्यादिसमायुक्ते भगवच्छब्दवाच्यता ॥ १३ ॥
गुणनिर्गुणयोश्चापि श्रुत्योर्नास्ति विरोधिता ।
प्राकृताऽप्राकृताभ्यां वै सामञ्जस्यं प्रशस्यते ॥ १४ ॥
विश्वतश्चक्षुराद्युक्त्याऽनन्दावयवकं हि तत् ।
आनन्दमयसूत्रस्य भाष्येऽपि तत्प्रसाधितम् ॥ १५ ॥
"सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति" ॥ १६ ॥
आदिप्रामाण्यवाक्यैश्च सावयवि च निर्गुणम् ।
अतो विरुद्धधर्मादिशङ्का नैवाऽत्र युज्यते ॥ १७ ॥
तादृशं ब्रह्म कृष्णोऽस्ति सर्वदोषविवर्जितम् ।
अशेषोपनिषद्वेद्यमप्राकृताऽखिलान्वितम् ॥ १८ ॥

तथा हि—

"न सूर्यस्तत्र भाती"ति "तमेव भान्तमि"त्यपि ।
ब्रह्मपरश्रुतेरर्थः स्फुटं प्रोक्तः स्मृतौ यथा ॥ १९ ॥
"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" ॥ २० ॥
एवं गोपालतापिन्यां "कृष्णः परमदैवतम्" ।
चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः ॥ २१ ॥
मुक्तावल्यां तदेवोक्तं श्रूयतां शास्त्रसंमतम् ।
"परं ब्रह्म तु कृष्णो हि सच्चिदानन्दकं बृहत्" ॥ २२ ॥
अन्तःकरणबोधे चाप्युक्तं चारुतरं शृणु ।
"कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम्" ॥ २३ ॥
रमणार्थं तु तद्ब्रह्म स्वाविर्भावेच्छया जगत् ।
कुरुतेऽशांस्तिरोभाव्य तिरोभावयतीच्छया ॥ २४ ॥
अनन्तशक्तिमत्त्वेन कृष्णे तद्युज्यतेऽञ्जसा ।
तत्त्वदीपे स्फुटं प्रोक्तमाचार्यचरणैर्यथा ॥ २५ ॥
"आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः ।
भक्त्या त्वाद्यो द्वितीयस्तु तदभावाद्धरौ सदा ॥ २६ ॥

सर्वाकारस्वरूपेण भविष्यामीति या हरेः ।
वीक्षा यथा यतो येन तथा प्रादुर्भवत्यजः ॥ २७ ॥
मृदादिभगवद्रूपं घटाद्याकारसंयुतम् ।
मूलेच्छातस्तथा तस्मिन्प्रादुर्भावो हरेस्तदा ॥ २८ ॥
तिरोभावस्तथैव स्याद्रूपान्तरविभेदतः" ।
अस्मिन्कुतर्कशङ्कादि तत्त्वदीपान्निरस्यताम् ॥ २९ ॥
भावकरणनिष्पन्नावेतौ शक्ती हरेः स्वतः ।

तद्यथा—

आविर्भवनमन्तश्च ( तिरः ) भवनमाद्यपक्षतः ॥ ३० ॥
आविष्करोति या कार्यं निमित्तात्प्रकृतेस्तथा ।
तन्निष्ठैव तु या शक्तिराविर्भावपदाभिधा ॥ ३१ ॥
लयं करोति या कार्यं स्वोपादानान्तरेव हि ।
तिरोभावात्मिका सा तु शक्तिर्नाशगता मता ॥ ३२ ॥
व्युत्पत्तिरपरे पक्षे मतेयमुभयोरपि ।
हरीच्छैव त्रिधा साऽस्ति जनिव्यक्तिसमागमैः ॥ ३३ ॥
तथाप्युभयनाम्नैव संगृह्यतेऽखिला भिदा ।
सद्ब्रह्मात्मकशक्तेस्तु परिणामि जगच्च सत् ॥ ३४ ॥
नन्वेवमखिला सृष्टिः सत्यैव मन्यते यदि ।
भ्रमदृष्टिः कथं सिध्येत् सकलैर्वादिभिर्मता ? ॥ ३५ ॥
मैवं, प्रपञ्चसंसारभेदादुभयसम्भवात् ।
विषयः स्वयमीशोऽस्ति प्रपञ्चस्तत्कृतोऽमृषा ॥ ३६ ॥
विषयता तु या मायाजन्या तज्जनितं मृषा ।
इत्थं बौद्धस्य मिथ्यात्वं सत्यत्वमितरस्य च ॥ ३७ ॥
"मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा ॥ ३८ ॥
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं तद् विद्धि मायामनोमयम्" ॥ ३९ ॥
इति भगवदुक्त्योश्च विरोधो विनिवर्तते ।
कार्यमात्रस्य मिथ्यात्वे विरोधं को निवारयेत् ॥ ४० ॥
वाचारम्भणशास्त्रेऽपि विकारो नामधेयतः ।
मिथ्यात्वस्य त्वनुक्तेश्च प्रपञ्चस्यास्ति सत्यता ॥ ४१ ॥

नेनु माया हरेः शक्तिः "मम माया दुरत्यया"।
"मन्मायामोहिताः सर्वे" इति तेनैव कीर्तनात् ॥ ४२ ॥
प्रपञ्चस्यापि तज्जत्वे सत्यत्वं दुर्घटं भवेत्।
मैवं, मायाकृतस्यापि सत्यत्वस्यानपायतः ॥ ४३ ॥

तथा हि—

सर्वभवनसामर्थ्या व्यामोहिका तथाऽपरा।
ऐन्द्रजालिकविद्या च तथा कापट्यमेव च ॥ ४४ ॥
इति चतुर्विऽधाः शास्त्रे मायार्थाः सुनिरूपिताः।
तेष्वाद्यकृतप्रपञ्चस्य सत्यत्वं हरिरूपतः ॥ ४५ ॥
"एतस्माज्जायते प्राणः" "आत्मानमकरोत्स्वयम्"।
तस्माद्धेति श्रुतेश्चैव प्रपञ्चे ब्रह्मता स्थिता ॥ ४६ ॥
वस्तुतः प्रतिमाकाराः सञ्चायके मृदादिना।
सञ्चायकाकृतिं मूर्तिं निर्मिमते यथा तथा ॥ ४७ ॥
सर्वप्रकृतिरूपायां मायायां भगवान्स्वयम्।
स्वात्मानं विश्वरूपेण कृत्वा तत्र स्थितो विभुः ॥ ४८ ॥
अतो न मायिकत्वेऽपि प्रपञ्चस्य मृषात्मता।
किन्तु ब्रह्मात्मकत्वेन सत्यत्वमिति निश्चितम् ॥ ४९ ॥
विश्वाकारतयाधीशः शक्त्या परिणतोऽपि सन्।
न विकारी न वा न्यूनो मणिकल्पलतादिवत् ॥ ५० ॥
इत्थं मुख्या तु या सृष्टिः ब्रह्माभिन्नतया सती।
प्राकृताऽप्राकृताभ्यां वै लीलासम्पत्तिरिष्यते ॥ ५१ ॥
"अंशो नाने"ति सूत्रेण "ममैवांशः" स्मृतेस्तथा।
परेशांशस्य जीवस्यौपाधिक्यवास्तवी भिदा ॥ ५२ ॥
उच्यते जीवसंसारो न तु प्रजायते त्विति।
निबन्धे मण्डनादौ च सम्यगेतन्निरूपितम् ॥ ५३ ॥
अथैक एव तु भूतात्मेति श्रुतिप्रमाणतः।
ब्रह्मणः प्रतिबिम्बो हि जीवात्मेति प्रतीयते ? ॥ ५४ ॥
मैवं, जलेऽशुरूपेणांशेनास्त्यनेकधा विभुः।
स्वरूपेणैकधैवास्ति तथाऽऽत्मेत्यर्थनिश्चयात् ॥ ५५ ॥
यथाऽविशुद्धकाचादौ प्रतिबिम्बो न दृश्यते।
तथाऽविशुद्धमायायां प्रतिबिम्बो न सम्भवेत् ॥ ५६ ॥

किञ्च माया तथाऽविद्या ह्युभे स्तो व्यापिके यदि ।
तत्प्रतिविम्बयोर्न स्यादीशजीवविवेकधीः ॥ ५७ ॥
चितश्च रूपराहित्यात्प्रतिविम्बः कथं भवेत् ।
रूपवति सरूपस्य प्रतिविम्बो हि दृश्यते ? ॥ ५८ ॥
तदुक्तं तत्त्वदीपेऽप्यरूपिणः स्फुरणं नहि ।
अविद्यायास्तथा बुद्धेः शुद्धत्वं न कदाचन ॥ ५९ ॥
अवच्छेदस्तथाऽभासः पक्षावेवं न सिध्यतः ।
श्रुत्या स्मृत्याऽथ तर्केण सूत्रैश्चापि विरोधतः ॥ ६० ॥
तस्मादन्यस्य पक्षस्यासाधुत्वनिश्चयाद्ध्रुवम् ।
श्रेयानंशत्ववादो हि श्रुतिसूत्रादिसम्मतः ॥ ६१ ॥
"वालाग्रशतभागस्य" "ह्याराग्रमात्र" तोऽपि च ।
"एषोऽणु" रादितः श्रुत्या ह्यणुर्जीव इति स्थितिः ॥ ६२ ॥
स प्रसृमरचैतन्यगुणादेवाऽखिलं वपुः ।
व्यापृत्यातिष्ठते सम्यगापादतलमस्तकम् ॥ ६३ ॥
भेदसहिष्ण्वभेदेन तादात्म्यं स्थापितं क्वचित् ।
कार्यकारणजीवेशनामरूपेषु यत्नतः ॥ ६४ ॥
वस्तुतस्त्वभेदोऽस्ति चिदचिद्भ्यां परात्मनः ।
इत्यद्वैतपदे शुद्धं पदं सम्यग्विशेषितम् ॥ ६५ ॥
श्रुत्या "पादोऽस्य विश्वे" ति स्फुलिंगोपमितेस्तथा ।
अवयवांश एवायं विकल्पान्तरतो वृथा ॥ ६६ ॥
स च स्वांशो न भिन्नांशः समेषां ब्रह्मताश्रुतेः ।
यस्तु भेदसहाभेदः स मध्यमधियां कृते ॥ ६७ ॥
आदावन्ते च यस्यास्ति यत्स्थरूपतया स्थितिः ।
ताद्रूप्यं तस्य मध्येऽपि दृश्यते हैमकुण्डले ॥ ६८ ॥
यतो वेति श्रुतेस्तस्मादुद्यचिदचिदात्मकं ।
ब्रह्मात्मकं सदेवेति तत्त्वमेतद्विबुध्यताम् ॥ ६९ ॥
बह्वोः कालाद्वियुक्तोऽयं जीवः श्रीपरमात्मना ।
अज्ञानादिति बुद्ध्वैतन्मुक्तिमार्गाश्रयो भवेत् ॥ ७० ॥
जन्मान्तरसहस्राणां पुण्योदयप्रभावतः ।
तद्विरहानलोद्भेदप्रक्षीणाशेषकल्मषः ॥ ७१ ॥

अन्विष्यन्परां शान्तिमाचार्याश्रयमाश्रयेत् ।
तन्मुखाद् द्विविधं मन्त्रं शरणात्मनिवेदनम् ॥ ७२ ॥
श्रुत्वैवेशकृपापात्रो मुच्यते तदनुग्रहात् ।
देहिनां ब्रह्मसम्बन्धात् सर्वदोषो निवर्तते ॥ ७३ ॥
तस्मात्सर्वात्मना नित्यं "श्रीकृष्णः शरणं मम" ।
इति मन्त्रस्य जापेन पूतशिष्यं हि सद्गुरुः ॥ ७४ ॥
आत्मनिवेदनं प्रोक्त्वा शरणं नयति प्रभोः ।
आचार्यं मां विजानीयादिति प्रामाण्यवाक्यतः ॥ ७५ ॥
आचार्यो भगवद्रूपस्तत्प्रापणं सुलभं ततः ।
अतस्तदाश्रयं गत्वा शृणुयान्मन्त्रमात्मधीः ॥ ७६ ॥
आचार्यं तु स्वयं प्राख्यत्प्रभुरात्मनिवेदनम् ।
सम्प्रदायप्रसिद्धेऽस्मिन्नैव कार्या विचारणा ॥ ७७ ॥
कलावितरमार्गाणां विनष्टप्रायदर्शनात् ।
भवसागरमुत्तर्तुं सुगमेयं तरी दृढा ॥ ७८ ॥
अतो निवेदितात्मा वै पुष्टिमाप्नोत्यनुत्तमाम् ।
उच्यते पुष्टिमार्गोऽयमुत्तमः सर्वसाधने ॥ ७९ ॥

तदुक्तम्—

"समस्तविषयत्यागः सर्वभावेन यत्र हि ।
समर्पणं च देहादेः पुष्टिमार्गः स कथ्यते" ॥ ८० ॥
पुष्टेस्तु लौकिकार्थत्वे "सुगन्धिं पुष्टिवर्धनम्" ।
अत्रापि पुष्टिशब्दार्थे न्यूनत्वं केन वार्यताम् ॥ ८१ ॥
पुष्टिस्तस्मान्न देहादेः किन्तु मोक्षस्य साधनम् ।
उक्तं भागवते स्पष्टं "पोषणं तदनुग्रहः" ॥ ८२ ॥
अनुग्रहो यदेशस्य भक्तहृत्कमले तदा ।
जातभक्तिरसोद्भूतेः हरिप्रीत्या स एव सः ॥ ८३ ॥
पुष्टिमार्गः प्रमाणाख्यमार्गादस्ति विलक्षणः ।
अनुग्रहैकसाध्यत्वादाचार्यवरबोधितः ॥ ८४ ॥
नन्वस्तु पुष्टिमार्गोऽयमन्यमार्गाद्विलक्षणः ।
किन्तु भक्तेरसात्मत्वं नैव सिध्येत्कथंचन ॥ ८५ ॥
स्नेहाद्यूयं वयं भक्त्येत्यादौ पृथक्कृतया न तत् ।
"स्नेहो भक्तिरिति प्रोक्तः" इति नारदवाक्यतः ॥ ८६ ॥

स्थायिभावस्तु यः स्नेहो विभावादित्रयाञ्चितः ।
रसतामेति तत्प्रोक्तं विभावादित्रयं यथा ॥ ८७ ॥
"यशोदाऽकर्ण्य नामानि कृष्णस्य चरितानि च ।
शृण्वन्त्यश्रूणि चास्राक्षीत्स्नेहस्नुतपयोधरा" ॥ ८८ ॥
नामश्रुतिर्विभावोऽत्रानुभावश्चरितश्रुतिः ।
अश्रुदुग्धश्रुतेरेवमस्त्येव व्यभिचारिता ॥ ८९ ॥
"निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः" ॥ ९० ॥
अत्र भक्ते रसात्मत्वमुक्तं व्यासेन कण्ठतः ।
तस्माद् भक्तिरसेनैव भक्तमुक्तिरिति स्थितिः ॥ ९१ ॥
रसरूपः परात्माऽस्ति "रसो वै सः" इति श्रुतेः ।
तादृशी च परा भक्तिस्ततो भक्तिर्न दुर्लभा ॥ ९२ ॥
"ज्ञानादेव तु कैवल्यं" यदुक्तं बहुशः श्रुतौ ।
अक्षरप्रापकत्वेन तासामस्ति गतार्थता ॥ ९३ ॥
पुरुषोत्तमप्राप्तिस्तु परभक्त्येति निश्चितम् ।
अयं प्रगीयते श्रुत्या ह्यक्षरात्परतः परः" ॥ ९४ ॥
"अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम" ॥ ९५ ॥
इत्यादिभगवद्वाक्याद् ब्रह्मधामाऽक्षरं स्मृतम् ।
तत्प्राप्तिर्ज्ञानतः प्रोक्ताऽथाक्षरादपि चोत्तमः" ॥ ९६ ॥
इत्यनेन तु वाक्येन स्वं तदुत्तममुक्तवान् ।
तस्मात्स्वस्योत्तमत्वोक्त्या श्रुतिसारं समीरितम् ॥ ९७ ॥
"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" ॥ ९८ ॥
ब्रह्मभावोत्तरं भक्तिरित्यनेन नियम्यते ।
ब्रह्मभावोऽक्षरज्ञानेऽविद्यानाशेन सिद्ध्यति ॥ ९९ ॥
पुरुषोत्तमसम्प्राप्तिः परभक्त्या न संशयः ।
ननु ज्ञानेन भक्त्या च मुक्तिः संश्रूयते द्विधा ॥ १०० ॥
समुच्चयो विकल्पो वा तत्र स्यादिति चेन्नहि ।
मर्यादापुष्टिमार्गाभ्यामुभयान्वयसम्भवात् ॥ १०१ ॥

"ज्ञानी त्वात्मैव मे" बोध्यः "भक्त्या लभ्यस्त्वनन्यया" ।
एवमीशो द्विधा मार्गं रचयामास यत्नतः ॥ १०२ ॥
तत्र शास्त्रविधानेन ज्ञानभक्त्या तु या भवेत् ।
मर्यादामुक्तिरुक्ता सा पुष्टिस्तत्कृपयैव या ॥ १०३ ॥
तस्मात्पुष्टेर्गरीयस्त्वं तत्स्वरूपादिलाभतः ।
मर्यादया विभिन्नत्वं फलसाधनभेदतः ॥ १०४ ॥
किञ्च पुष्ट्याऽखिलो भोगः "जक्षन्क्रीडन्नि"ति श्रुतेः ।
"आप्नोती"ति श्रुतेरेव तल्लयमात्रमन्यतः ॥ १०५ ॥
तस्मान्निवेदितात्मा वै करुणाब्धेरनुग्रहात् ।
संसारदुःखमुच्छिद्य ब्रह्मात्मत्वाववोधतः ॥ १०६ ॥
परभक्त्या परं प्राप्य क्रीडत्यानन्दसागरे ।
यथाधिकारमात्मीयान् लीलां स्वादयति प्रभुः ॥ १०७ ॥
पदार्थमणिमालेयं श्यामसुन्दरशर्म्मणा ।
विष्णोर्वक्षसि विन्यस्ता सर्वसिद्धिप्रदा नृणाम् ॥ १०८ ॥
अस्यां कृतौ चेत्स्खलनं कथञ्चित्, मद्बुद्धिदोषादथवा प्रमादात् ।
संयोजितैषा कृपयैव यस्य, क्षमेत सर्वं स प्रभुः समन्तात् ॥१०९॥

॥ ॐ तत्सत् ॥

इति श्रीश्यामसुन्दरशर्मगुम्फिता शुद्धाद्वैतपदार्थ-
मणिमाला समाप्ता ।

---

ॐ

श्रीः

# व्याप्तिपञ्चकम्

## ॥ माथुरीटीकासहितम् ॥

(चि०) नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः ?

माथुरी

अनुमानप्रामाण्यं निरूप्य व्याप्तिस्वरूपनिरूपणमारभते—नन्वित्यादिना—( अनुमितिहेतु ) इत्यस्याऽनुमानप्रामाण्यानुमितिहेत्वित्य-

चन्द्रिका

गणेशं विघ्नहर्तारमङ्गनानन्दनं तथा ।
नत्वा विरच्यते व्याख्या व्याप्तिपञ्चकचन्द्रिका ॥१॥
यत्कृपाफलकारूढो न्यायशास्त्रमहोदधा—
वेत्याप्तवित्तिरत्नोऽहं वन्दे तद्गुरुपादुकाः ॥२॥

इतः पूर्वग्रन्थे विप्रलम्भकवाक्यवत् प्रत्यक्षाऽजनकत्वेनाऽनुमानं न प्रमाणमिति चार्वाकोत्थापितयुक्त्याऽभासनिरासाय—अनुमानं प्रमाणं प्रमितिकरणतावच्छेदकधर्मवत्वात् प्रत्यक्षादिवदिति प्रमात्मिकाऽनुमितिरुपन्यस्ता, प्रमा च प्रमाणं विना न सिद्ध्यति, प्रमाणं च प्रकृते व्याप्तिज्ञानम् तदवच्छेदिका व्याप्तिः कीदृशीत्याशयेनाह मणिकारः—नन्विति । मूलग्रन्थाशयं प्रकटयितुं टीकाकृदाह—अनुमानेति । अनुमानमनुमितिकरणं=व्याप्तिज्ञानं तस्य प्रामाण्यमित्यर्थः । निरूप्येति—ल्यबर्थो ध्वंसकालीनत्वं तस्य व्याप्तिविषयकज्ञानानुकूलव्यापारात्मकव्याप्तिस्वरूपनिरूपणेऽन्वयः ।

### माथुरी

र्थः। ( व्याप्तिज्ञाने ) इत्यत्र च विषयत्वं सप्तम्यर्थः। तथा च, अनुमाननिष्ठप्रामाण्याऽनुमितिहेतुव्याप्तिज्ञानविषयीभूता व्याप्तिः केत्यर्थः।

अनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यनेन व्याप्तेरनुमानप्रामाण्योपपादकत्वकथनादनुमानप्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणे उपोद्घात एव सङ्गतिः सूचिता। उपपादकत्वञ्चात्र ज्ञापकत्वम् ॥

### चन्द्रिका

तादृशनिरूपणनिष्ठकर्मत्वस्य आद्यकृत्यात्मके आङ्पूर्वक 'रभ' धात्वर्थेऽन्वयः। कृतावाच्यत्वञ्च = तत्कृतिसमवायिसमवेतप्रामाण्यपरीक्षागोचरकृतिक्षणध्वंसानधिकरणक्षणवृत्तित्वरूपं गूढार्थतत्त्वालोकोक्तं बोध्यम्। आख्यात'ते'इत्यस्याश्रयत्वमर्थः। एवञ्चानुमाननिष्ठप्रामाण्यानुमित्यनुकूलव्यापारध्वंसकालिकव्याप्तिस्वरूपविषयकज्ञानानुकूलव्यापारविषयकतत्कृतिसमवायिसमवेतप्रामाण्यपरीक्षागोचरकृतिक्षणध्वंसानधिकरणक्षणवृत्तिकृत्याश्रयो मणिकार इति शाब्दबोधः सम्पद्यते। मूलस्थानुमितिपदस्य पर्वतादिपक्षकानुमितिपरत्वं न सम्भवति, अनुमानपक्षकप्रामाण्यानुमितिसंशये तदनुमितिहेतुव्याप्तिज्ञानघटकीभूतव्याप्तेरेव निरूपणीयत्वमिति विशिष्याह—'अनुमितिहेत्विति'। फलितार्थमाह—तथा चेति। अनुमाननिष्ठा या प्रामाण्यविषयकानुमितिः तद्धेतुर्यद्व्याप्तिज्ञानं तादृशव्याप्तिज्ञानविषयीभूता व्याप्तिः केति फलितार्थः।

अनुमानप्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणे सङ्गतिं सूचयति—अनुमानेति। अनुमाननिष्ठा प्रामाण्यानुमितिः ( अनुमानं प्रमाणमित्याकारिका ) तद्धेत्वित्यनेन व्याप्तेरनुमानप्रामाण्योपपादकत्वकथनात्। अत्र षष्ठ्यर्थो निष्ठत्वम्, उपपादकत्वं चात्र जनकत्वम्, तथा च व्याप्तिनिष्ठस्यानुमाननिष्ठप्रामाण्यज्ञानजनकज्ञानविषयत्वस्य कथनात् = प्रतिपादनात् इत्यर्थो बोध्यः। उपोद्घात इति। "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इति प्रकृतसिद्ध्यर्था ( प्रामाण्यनिरूपणानन्तरव्याप्तिनिरूपणसिद्ध्यर्था ) चिन्तैवोपोद्घातशब्दार्थः। एवञ्च यन्निरूपणानन्तरं यन्निरूप्यते तत् तन्निरूपितसङ्गतिमद्भवतीति नियमात् प्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणं क्रियते। व्याप्तिस्वरूपनिरूपणं विना निरूपितमप्यनुमानप्रामाण्यमाकुलीभवेदिति भवति प्रकृत ( अनुमानप्रामाण्यनिरूपणानन्तरं-व्याप्तिस्वरूपनिरूपण ) सिद्ध्यर्थत्वं चिन्ताया इति। अयमेवाभिप्रायः सूचितेति पदेन ध्वन्यते। ज्ञापक, जनक, समर्थक, परिचायकादिभेदेनोपपादकपदस्य विविधार्थकतया संशयनिराशायाह—उपपादकत्वञ्चात्रेति। अनुमितिपदस्यानुमितिपक्ष-

**चि० मू०—न तावदव्यभिचरितत्वम् । तद्धि न साध्याभाववदवृत्तित्वम् ॥**

माथुरी

केचित्तु—अनुमितिपदमनुमितिनिष्ठेतरभेदानुमितिपरम् । तथा चानुमितिनिष्ठेतरभेदानुमितौ यो हेतुः प्रागुक्तव्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वरूपस्तद्घटकं यद् व्याप्तिज्ञानं तदंशे विशेषणीभूता व्याप्तिः केत्यर्थः । घटकत्वार्थकसप्तम्या तत्पुरुषसमासात् । तथा च प्रागुक्तानुमितिलक्षणोपोद्घात एव सङ्गतिरनेन सूचितेत्याहुः ॥

**न तावदिति ( तावत् ) वाक्यालङ्कारे । अव्यभिचरितत्वम् = अव्यभिचरितत्वपदप्रतिपाद्यम् । तत्र हेतुमाह—तद्धीत्यादि । हि = यस्मात् । तत् = अव्यभिचरितत्वपदप्रतिपाद्यम् । नेति सर्वस्मिन्नेव लक्षणे सम्बध्यते । तथा च व्याप्तिर्यतः साध्याभाववदवृत्तित्वादिरूपा-**

चन्द्रिका

केतरभेदानुमितिपरत्वं वर्णयतामुपोद्घातवादिनां मतमाह—केचित्त्विति । अनुमितित्वावच्छिन्ने विद्यते य इतरेषां घटादीनां भेदः तत्साध्यकानुमितिपरम् = तद्विधेयकानुमितीच्छयोच्चरितमिति बोध्यम् । तत्परत्वे फलितार्थमाह—तथा चेति । प्रागुक्तेति = अनुमितिग्रन्थोक्तव्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वरूपहेतुः । तद्घटकं = तादृशहेत्वंशे विशेषणीभूतम् । तदंशे = व्याप्तिज्ञानांशे, विषयितासम्बन्धेन विशेषणीभूता व्याप्तिः केत्यर्थः । एवञ्चात्र—अनुमितिः स्वेतरभिन्ना व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यस्मृतिभिन्नज्ञानत्वादित्याकाराऽनुमितिर्बोध्या । ननु—अनुमितिहेत्वित्यादिमूलोक्तग्रन्थेन कथं व्याप्तिज्ञानस्यानुमितिघटकत्वेन लाभ इत्यत आह—घटकत्वार्थकेति । एवञ्चानुमितिहेतौ व्याप्तिज्ञानमनुमितिहेतुव्याप्तिज्ञानमिति लुप्तसप्तमीतत्पुरुषसमासस्य घटकत्वार्थकतयैतादृशार्थलाभः सूचितः । अनुमितिव्याप्त्योः सङ्गत्यलाभेनानुमितिनिरूपणानन्तरं व्याप्तिस्वरूपनिरूपणाऽसम्भवशङ्कापनोदनायाह— तथा चेति । प्रागुक्तेति । प्रागुक्तानुमितिग्रन्थोक्तेतरभेदानुमापकव्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वरूपलक्षणनिरूपितोपोद्घातसङ्गतिः व्याप्तिनिष्ठेति तात्पर्यम् ।

अव्यभिचरितत्वस्याव्यभिचरितत्वपदप्रतिपाद्यत्वकथनेन पौनरुक्त्यशङ्कानिरासः । अन्यथाऽव्यभिचरितत्वस्य साध्याभाववदवृत्तित्वादिस्वरूपत्वाभ्युपगमेन पौनरुक्त्यं स्यादेवेति भावः । तथा चेति । नेत्यस्य प्रत्येकं लक्षणे सम्बन्धे चेत्यर्थः । व्याप्ति-

माधुरी

ऽव्यभिचरितत्वशब्दप्रतिपाद्यस्वरूपा न अतोऽव्यभिचरितत्वशब्दप्रतिपाद्यस्वरूपा नेत्यर्थः पर्यवसितः। विशेषाभावकूटस्य सामान्याभावहेतुता च प्रसिद्धैवेति। अत एतन्नञ्द्वयोपादानं न निरर्थकम्॥

साध्याभाववदवृत्तित्वमिति। वृत्तम्=वृत्तिः, भावे निष्ठाप्रत्ययात्। वृत्तस्याभावोऽवृत्तम्; वृत्त्यभाव इति यावत्। साध्याभाववतोऽवृत्तम् साध्याभाववदवृत्तम्, साध्याभाववद्वृत्त्यभाव इति यावत्। तद् यत्रास्ति स साध्याभाववदवृत्ती; मत्वर्थीयेन्प्रत्ययात्। तस्य भावः साध्याभाववदवृत्तित्वम्। तथा च साध्याभाववद्वृत्त्यभाववत्त्वमिति फलितमिति प्राञ्चः॥

चन्द्रिका

यत इति। यतः= केवलान्वयिसाध्यकहेतावव्याप्तिरूपदोषतः। व्याप्तिः अव्यभिचरितत्वपदप्रतिपाद्यभिन्ना पञ्चविधसाध्याभाववदवृत्तित्वादिस्वरूपाव्यभिचरितत्वपदप्रतिपाद्ययावद्भेदकूटवत्त्वात्, यन्नैतावदित्यनुमितिस्वरूपं बोध्यम्। ननु व्याप्तौ साध्याभाववदवृत्तित्वादिभिन्नत्वस्य सिद्धत्वेऽपि, अव्यभिचरितत्वशब्दप्रतिपाद्यभेदसिद्धौ प्रमाणाभाव इति शङ्कायामाह—विशेषेति। विशेषाभावकूटस्य= नीलघटो नास्ति, पीतघटो नास्तीत्याद्याकारक-सामान्य ( घटत्व ) धर्मावाऽन्तर ( विशेष ) धर्मावच्छिन्नप्रतियोगिताकाभावसमुदायस्य। सामान्याभावहेतुता= सामान्य ( घटत्व ) धर्मावच्छिन्नप्रतियोगिताकाऽभावहेतुता। एवञ्च यथा नीलघटो नास्ति, पीतघटो नास्तीत्यादिविशेषाभावसमूहः सामान्य ( घटत्व ) धर्मावच्छिन्नप्रतियोगिताकाभावसाधकस्तथा प्रकृते—अव्यभिचरितत्वपदप्रतिपाद्यत्वाऽवान्तरसाध्याभाववदवृत्तित्वादिधर्मावच्छिन्नप्रतियोगिताकविशेषाभावकूटो व्याप्तौ सामान्याऽव्यभिचरितत्वपदप्रतिपाद्यत्वावच्छिन्नप्रतियोगिताकाभावं साधयेदिति न काचिद्विमतिः। अत इति। अतः= विशेषाभावकूटस्य सामान्याभावसाधकत्वादेव। नञ्द्वयोपादानम्= मूले न तावदित्यत्र, तद्धि नेत्यत्र च नञ्द्वयोपादानम्। एवञ्च प्रथमनञाऽव्यभिचरितत्वसामान्यभेदः प्रतीयते, द्वितीयनञा च साध्याभाववदवृत्तित्वादिभेदकूटः प्रतीयते; तत एव विशेषाभावकूटेन सामान्याभावः सिद्ध्यति, अन्यथा तन्न स्यादिति भावः। साध्याभाववदवृत्तित्वमित्यस्य विवक्षितार्थलाभाय विग्रहवाक्यं स्फोटयति—वृत्तमित्यादि। "तस्य भावे त्वतलौ"विति पाणिनिसूत्रं स्मारयति—भाव इति। तथा च 'वृत्' धातूत्तरभावार्थकनिष्ठाप्रत्ययेन वृत्तमित्यस्य वृत्तिरित्यर्थो बोध्यः। तत्= साध्याभाववदवृत्तम्। यत्र–सद्धेतौ। सः= धूमादिरूपसद्धेतुः। फलितार्थमाह—तथा चेति। तथाविधविग्रहवाक्यस्वीकारे सति—साध्याऽभावाधिकरणनिरूपित-

## माथुरी

तदसत्, न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यनुशासनविरोधात्। तत्र कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वात्। तच्च अगुणवत्त्वमिति साधर्म्यव्याख्यानावसरे गुणप्रकाशरहस्ये तद्दीधितिरहस्ये च स्फुटम्। अव्ययीभावसमासोत्तरपदार्थेन समं तत्समासाऽनिविष्टपदार्थान्तरान्वयस्याऽव्युत्पन्नत्वात्॥

## चन्द्रिका

वृत्तित्वाभाववत्त्वमित्याकारप्राप्तव्याप्तिलक्षणस्य—वह्निमान् धूमादित्यादिसद्धेतौ साध्याभावा (वह्न्यभावा) धिकरण (जलह्रदादि) निरूपितवृत्तित्वं मीनसैवालादौ तदभाववत्त्वं धूमादिसद्धेताविति लक्षणसमन्वयः। प्राचीनमतं दूषयति—तदसदिति। न कर्मधारयादित्यस्य कर्मधारयसमासान्मत्वर्थीय प्रत्ययो (इनादिः) न भवति बहुव्रीहिसमासश्चेत्तदर्थप्रतिपत्तिकरः (कर्मधारयं कृत्वा मत्वर्थीयप्रत्ययेन यादृशार्थो लभ्यते, तादृशार्थबोधकः) कर्मधारयसमासोत्तरमत्वर्थीयजन्यबोधजनकतावच्छेदकश्चेद् बहुव्रीहिसमास इति भावः। ननु प्रकृते कर्मधारयसमासाभावात्कथं तदुक्तिः सङ्गतेत्यत आह—तत्र कर्मधारयपदस्येति। तत्र=उक्तानुशासने। बहुव्रीहीतरसमासपरत्वात्= बहुव्रीहीतरयावत्समासबोधकत्वात्। एवञ्च प्रकृते कर्मधारयसमासाभावेऽपि लाक्षणिककर्मधारयपदस्य बहुव्रीहीतरसमासमात्रबोधनेच्छयोच्चारिततयाऽव्ययीभावसमासोत्तरमपि न मत्वर्थीयेन् प्रत्ययो भवितुमर्हतीति भावः। कर्मधारयपदस्य बहुव्रीहीतरपरत्वे बीजमाह—तच्चेति। कर्मधारयपदस्य बहुव्रीहीतरपरत्वञ्च। गुणप्रकाशरहस्ये= वर्धमानोपाध्यायकृतकुसुमाञ्जलिप्रकाशटीकायाम्। तद्दीधितिरहस्ये च= तस्यैव (गुणप्रकाशस्यैव) दीधितिरहस्ये चेत्यर्थः। स्फुटं यथा—"गुणा यत्र विद्यन्ते ते गुणवन्तो न गुणवन्तोऽगुणवन्तस्तेषां भावोऽगुणवत्त्वमिति समासादरे भेदस्य व्याप्यवृत्तित्वेन गुणवद्भेदस्य द्रव्येऽसत्त्वं भवति। गुणस्याभावोऽगुणं तदस्यास्तीत्यगुणवान् तस्य भावोऽगुणवत्त्वमित्यत्राऽव्ययीभावसमासोत्तरं मतुप्प्रत्यये सति, अव्ययीभावसमासघटकनञाऽत्यन्ताभावो बोध्यते, तस्य चाव्याप्यवृत्तितयोत्पत्तिकालावच्छेदेन द्रव्येऽपि गुणाभावः स्यादितीयं व्युत्पत्तिर्न साधीयसीति प्रोक्तानुशासनेऽपि कर्मधारयपदस्य बहुव्रीहीतरपरत्वाऽवश्यकत्वेऽव्ययीभावानन्तरं न मत्वर्थीयप्रत्ययः समुचित इति भावः। ननु नीलघटवद्भूतलमित्यादौ नीलघटयोः कर्मधारयानन्तरं मतुप्प्रत्ययदर्शनेनोक्तानुशासनं विवादग्रस्तमिति न प्राचां विग्रहवाक्यमसङ्गतमित्यत आह—अव्ययीभावेति। तत्समासाऽनिविष्टेति= अव्ययीभावसमासानिविष्टेत्यर्थः। अव्युत्पन्नत्वात्= समभिव्याहारज्ञान-

माथुरी

यथा भूतल उपकुम्भं, भूतलेऽघटमित्यादौ भूतलवृत्तिघटसमीप-तदत्यन्ताभावयोरप्रतीतेः। एतेन वृत्तेरभावोऽवृत्तीत्यव्ययीभावानन्तरं साध्याभाववतोऽवृत्ति यत्रेति बहुव्रीहिरित्यपि प्रत्युक्तम्। वृत्तौ साध्याभाववतोऽनन्वयापत्तेः। अव्ययीभावसमासस्याव्ययतया तेन समं समासान्तराऽसम्भवाच्च, नन्नुपाध्यादिरूपाऽव्ययविशेषाणामेव परिगणितत्वात्॥

वस्तुतस्तु—साध्याभाववतो न वृत्तिर्यत्रेति त्रिपद—व्यधिकरणबहुव्रीह्युत्तरं त्वप्रत्ययः। साध्याभाववत इति निरूपितत्वं षष्ठ्यर्थः, अन्वयश्चास्य वृत्तौ। तथा च—साध्याभावाधिकरणनिरूपितवृत्त्यभाववत्त्वमव्यभिचरितत्वमिति फलितार्थः। न च व्यधिकरणबहुव्रीहिः सर्वत्र न साधुरिति वाच्यम्, अयं हेतुः साध्याभाववदवृत्तिरित्यादौ व्यधिकरणबहुव्रीहिं विना गत्यन्तराभावेनाऽत्रापि व्यधिकरणबहुव्रीहेः साधुत्वात्।

चन्द्रिका

जन्यप्रतीतिविषयरहितत्वात्। दृष्टान्तमाह—यथेति। यथा कुम्भस्य समीपं, घटस्याभाव इत्यव्ययीभावसमासेन निष्पन्न उपकुम्भम्; अघटमित्यादौ सप्तम्यन्तभूतलादिपदनिवेशेऽपि भूतलवृत्तिघटसमीप— भूतलवृत्तिघटात्यन्ताभावयोरप्रतीतिस्तथा प्रकृतेऽपि वृत्तस्याऽभावोऽवृत्तमित्यव्ययीभावानन्तरमेतत्समासाघटकसाध्याभाववत्पदस्य निवेशेऽपि विवक्षित—साध्याभावाधिकरणनिरूपितवृत्तित्वाभावस्य प्रतीतिर्न स्यादिति भावः। एतेन = अव्ययीभावसमासोत्तरपदार्थेन समं तत्समासाऽनिविष्टेत्यादिकथनेन। प्रत्युक्तम् = निरस्तम्। एतादृशविग्रहस्याश्रद्धेयत्वे बीजमाह—वृत्ताविति। अनन्वयापत्तेः = स्वरूपसम्बन्धात्मकान्वयप्रतियोगित्वाभावापत्तेः। दोषान्तरमाह—अव्ययीभावेति। तथा च अवृत्तपदस्याऽव्ययत्वेन तेन समं साध्याभाववतोऽवृत्तमिति षष्ठीतत्पुरुषसमासो भवितुन्नार्हतीति भावः। अव्ययीभावसमासः परिगणिताव्ययेन सममेव जायते न त्वव्ययसामान्येन सममित्याशयं व्यनक्ति—नन्नुपाध्यादीति। इत्थञ्चाऽव्ययीभावस्य परिगणिताऽव्ययेनैव यदि समासः किमुताऽन्येन समास इति भावः। ननु प्राचीनमतानुसारमव्ययीभावानन्तरं मत्वर्थीयविधानं बहुव्रीहिमतञ्च खण्डिते तदा प्रकृते कीदृशं विग्रहवाक्यमित्याकांक्षायां स्वसिद्धान्तमाह—वस्तुतस्त्विति। भावप्रधाननिर्देशेन वृत्तेरित्यस्य वृत्तित्वमर्थो बोध्यः। यत्र = हेतौ। त्रिपदम् = साध्याभाववतः, नञ्, वृत्तिश्चेति। व्यधिकरणं—विभिन्नविभक्तिकम्। तथा चेति। षष्ठ्यर्थस्य निरूपितार्थकत्वे, वृत्तित्वे तस्यान्वये चेत्यर्थः। न साधुः = नार्थबोधजनकः। गत्यन्तराभावेन = समासान्तरेण

**माथुरी**

साध्याभावाधिकरणवृत्त्यभावश्च तादृशवृत्तित्वसामान्याभावो बोध्यः। तेन धूमवान् वह्नेरित्यादौ धूमाभाववज्जलह्रदादिवृत्त्यभावस्य धूमाभाववद्वृत्तित्वजलत्वोभयत्वावच्छिन्नाभावस्य च वह्नौ सत्त्वेऽपि नातिव्याप्तिः॥

साध्याभाववद्वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन विवक्षणीया। तेन वह्न्यभाववति धूमावयवे जलह्रदादौ च समवायेन कालिकविशेषणतादिना च धूमस्य वृत्तावपि न क्षतिः।

साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः। तेन वह्निमान् धूमादित्यादौ समवायादि-

**चन्द्रिका**

विवक्षितार्थबोधाऽसम्भवेन। तादृशवृत्तित्वेति। साध्याभावाधिकरणवृत्त्यभावरूपव्याप्तिलक्षणघटकीभूतवृत्त्यभावः = साध्याभावाधिकरणनिरूपितवृत्तितात्वेतरधर्मानवच्छिन्न—वृत्तितात्वावच्छिन्नप्रतियोगिताकसामान्याभावो बोध्य इत्यर्थः। तेन = न्यूनेतरवारकविशेषणेन। धूमवान् वह्नेरित्यादिव्यभिचारिस्थले वृत्तितात्वावच्छिन्नेति न्यूनवारकविशेषणाऽसत्त्वे साध्याभाव (धूमाभाव) वत्यत्किञ्चिदधिकरण = जलह्रदादिनिरूपितवृत्तित्वाभावस्य, तादृशवृत्तितात्वेतरधर्मानवच्छिन्नरूपेतरवारकविशेषणाऽसत्त्वे च धूमाभाववद्वृत्तित्वजलत्वैतदुभयत्वावच्छिन्नप्रतियोगिताकाभावस्य च वह्न्यात्मकहेतौ सत्त्वेऽपि नातिव्याप्तिरिति भावः। वस्तुतस्तु—साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्ना या साध्यनिष्ठावच्छेदकता तद्भिन्ना सती अभावत्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तदनिरूपिता निरुक्तावच्छेदकताद्वयनिरूपिता च या अभावनिष्ठावच्छेदकता तद्भिन्ना सती अधिकरणत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिता निरुक्तावच्छेदकताद्वयनिरूपिता या अधिकरणनिष्ठावच्छेदकता तद्भिन्ना सती या वृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपिता या निरुक्तावच्छेदकताद्वयनिरूपिता प्रतियोगिता तन्निरूपकोऽभाव एव तादृशवृत्तित्वसामान्याभाव इत्यस्यार्थः। तेन महानसीयवह्न्यभावं वह्निसामान्याभावद्रव्यत्वान्यतराधिकरणादिकञ्चादाय वह्निमान्धूमादित्यादौ नाव्याप्तिः। तेनेति। येन सम्बन्धेन हेतुः पक्षे वर्तते तादृशहेतुतावच्छेदकसम्बन्धेनेत्यर्थः। एवञ्च प्रकृते वह्न्य (साध्या) भावाधिकरणे = धूमावयवे, जलह्रदादौ च समवायेन कालिकसम्बन्धेन च धूमस्य (हेतोः) वृत्तावपि नाऽव्याप्तिः। साध्याभावश्चेति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियो-

माथुरी

सम्बन्धेन वह्निसामान्याभाववति संयोगसम्बन्धेन तत्तद्वह्नित्व—वह्नि-जलत्वोभयत्वाद्यवच्छिन्नाभाववति च पर्वतादौ संयोगेन धूमस्य वृत्तावपि न क्षतिः ।

ननु तथापि गुणत्ववान् ज्ञानत्वात्, सत्तावान् जातेरित्यादौ विषयित्व–अव्याप्यत्वादिसम्बन्धेन तादृशसाध्याभाववति ज्ञानादौ ज्ञानत्वजात्यादेर्वर्तमानत्वादव्याप्तिः । न च साध्याभावाधिकरणत्वमभावीयविशेषणताविशेषसम्बन्धेन विवक्षितमिति वाच्यम् ।

चन्द्रिका

गिताको बोध्यः । एवञ्च प्रकृते वह्निमान्धूमादित्यादौ संयोगाद्यात्मकः सम्बन्धः, वह्नित्वाद्यात्मको धर्मश्च स्यात्तेन प्रकृते येन केनचित्समवायादिसम्बन्धेन वह्न्यभाववति साध्यतावच्छेदकसंयोगसम्बन्धेन यत्किञ्चित्तत्तद्वह्नित्व—वह्निजलोभयनिष्ठोभयत्वाद्यवच्छिन्नप्रतियोगिताकवह्निसामान्याभाववति धूमाधिकरणे पर्वतादौ हेतुतावच्छेदकसंयोगसम्बन्धेन धूमस्य वृत्तावपि नाव्याप्तिः । वस्तुतस्तु—सम्बन्धविधया यः साध्यतावच्छेदकः सम्बन्धविधया तदवच्छिन्नत्वे सति धर्मविधया यः साध्यतावच्छेदकः धर्मविधया तदवच्छिन्नप्रतियोगिताकसाध्याभावो बोध्यः, तेन संयोगिनः समवायेन साध्यतायां कपालत्वादिसद्धेतौ संयोगेन समवायिनः समवायेन संयोगिनश्चाभावमादाय नाव्याप्तिः ॥ ननु तथापीत्यस्य = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्याभावाधिकरणनिरूपित—हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितात्वेतरधर्मानवच्छिन्नवृत्तितात्वावच्छिन्नवृत्तिताप्रतियोगिकोऽभावो व्याप्तिरिति लक्षणस्वरूपसत्त्वेऽपीत्यर्थः । अत्र गुणत्ववान् ज्ञानत्वादित्यत्र विषयित्वसम्बन्धेन सत्तावान् जातेरित्यत्र चाव्याप्यत्वसम्बन्धेनाव्याप्तिरित्यन्वयो बोध्यः । तादृशेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्नाधेयतानिरूपकाधिकरणतावतीत्यर्थः । एवञ्च गुणत्ववान् ज्ञानत्वादित्यत्र विषयित्वसम्बन्धेन ज्ञाने सर्वपदार्थस्य वृत्तित्वनियमात् तादृशसाध्याभावस्य ( गुणत्वाभावस्यापि ) ज्ञाने वृत्तित्वात्तत्र ज्ञानत्वहेतोः सत्त्वेनाव्याप्तिः । एवं सत्तावान् जातेरित्यत्रापि अव्याप्यत्व ( स्वाभाववद्वृत्तित्व ) सम्बन्धेन तादृश ( साध्यतावच्छेदकेत्यादिविशिष्ट ) प्रतियोगिताकसाध्याभाववति द्रव्यादित्रये जातिरूपहेतोः सत्त्वादव्याप्तिः । तथा हि—स्वः साध्याभावः ( सत्ताभावः ) तदभावः ( सत्ताभावाभावः = सत्तारूपः ) तद्वति ( द्रव्यादित्रये ) वृत्तित्वरूपाव्याप्यत्वसम्बन्धेन तादृशसाध्याभाववति ( सत्ताभाववति ) द्रव्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन जातेः

### माथुरी

न च साध्याभावाधिकरणत्वमभावीयविशेषणताविशेषसम्बन्धेन विवक्षितमिति वाच्यम्, तथा सति घटत्वात्यन्ताभाववान् घटान्योऽन्याभाववान् वा पटत्वादित्यादौ साध्याभावस्य घटत्वादेः विशेषणताविशेषसम्बन्धेनाधिकरणस्याऽप्रसिद्धयाऽव्याप्तेरिति चेन्न, अत्यन्ताभावाऽन्योऽन्याभावयोरत्यन्ताभावस्य सप्तमपदार्थस्वरूपत्वात्। अत्यन्ताभावाऽन्योन्याभावयोरत्यन्ताभावस्य प्रतियोग्यादिस्वरूपत्वनये तु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्य-

### चन्द्रिका

सत्त्वादव्याप्तिः स्यादेवेति भावः। नन्वत्र विषयितायाः वृत्त्यनियामकतया तेन सम्बन्धेन गुणत्वाभावस्याधिकरणाऽप्रसिद्धया नाव्याप्तिसम्भवः। न च कालिकसम्बन्धेन साध्याभावाधिकरणे जन्यज्ञाने ज्ञानत्वहेतोः सत्त्वेनाव्याप्तिः स्यादेवेति वाच्यम्, इदानीं जन्ये कालोपाधित्वानभ्युपगमात्। अन्यथा कालिकेन वह्न्यभावस्याधिकरणतायाः पर्वतादौ सत्त्वात् पर्वतो वह्निमान् धूमादिति प्रसिद्धस्थलोपेक्षाया असङ्गत्यापत्तेरित्यतः सत्तावान् जातेरिति स्थलान्तरानुसरणम्। न च तत्राप्यव्याप्यत्वसम्बन्धस्य वृत्त्यनियामकत्वशङ्का, वृत्तित्वघटितसम्बन्धस्य वृत्तिनियामकतायाः प्राचीनमतसिद्धत्वादिति ध्येयम्।

साध्याभावाधिकरणत्वम्= साध्याभावत्वावच्छिन्नाधेयतानिरूपकाधिकरणत्वम्। अभावीयेत्यस्य स्वरूपसम्बन्धेनेत्यर्थः। एवञ्च गुणत्वाभावस्य स्वरूपसम्बन्धेनाधिकरणं द्रव्यादिकमेव तत्र हेतुतावच्छेदकसमवायसम्बन्धेन ज्ञानत्वहेतोरवृत्तेः, सत्ताभावस्य च तेन सम्बन्धेनाधिकरणे सामान्यादौ जातिरूपहेतोरवर्तमानत्वान्न पूर्वोक्ताऽव्याप्तिः। तथा सति। स्वरूपसम्बन्धेन साध्याभावाधिकरणत्वविवक्षणे सति। अत्यन्ताभावाभावस्य प्रतियोगिस्वरूपत्वे, अन्योऽन्याभावाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वनियमे च—साध्याभावस्य घटत्वात्यन्ताभावाभावस्य, घटान्योऽन्याभावाभावस्य च घटत्वरूपत्वे विवक्षितस्वरूपसम्बन्धेनाधिकरणाऽप्रसिद्धया समवायेनैव प्रसिद्धया चाव्याप्तिः। सप्तमपदार्थस्वरूपत्वात् अभावपदार्थस्वरूपत्वात्। तथा च अभावस्वरूपस्य साध्याभावस्य स्वरूपसम्बन्धेनाधिकरणत्वस्य प्रसिद्धतया प्रकृतसाध्यद्वयाभावस्याधिकरणे घटे पटत्वहेतोरवृत्त्या नाव्याप्तिरिति भावः। नन्वभावाभावस्य सप्तमपदार्थस्वरूपत्वे केवलान्वयिग्रन्थे अत्यन्ताभावान्योन्याभावयोरत्यन्ताभावस्य क्रमेण प्रतियोगितदवच्छेदकत्वव्यवस्थापनं, सिद्धान्तलक्षणदीधितौ च भावाभावसाधारणमभावत्वनिर्वचनं च विरुध्येत इत्यत आह— अत्यन्तेति। अत्र

## माथुरी

सामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं वक्तव्यम् ।

वृत्त्यन्तं प्रतियोगिताविशेषणम् । तादृशसम्बन्धश्च वह्निमान्धूमादित्यादिभावसाध्यकस्थले विशेषणताविशेष एव । घटत्वाभाववान्पटत्वादित्याद्यभावसाध्यकस्थले तु समवायादिरेव ।

समवायविषयित्वादिसम्बन्धेन प्रमेयादिसाध्यके ज्ञानत्वादिहेतौ साध्यतावच्छेदकसमवायादिसम्बन्धावच्छिन्नप्रमेयाद्यभावस्य कालिकादिस-

## चन्द्रिका

प्रतियोग्यादीत्यादिपदेन प्रतियोगितावच्छेदको बोध्यः । साध्यतेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नसाध्यनिष्ठप्रतियोगितानिरूपकाभाववृत्तिसाध्यसामान्यीय (निखिलसाध्यनिरूपित) प्रतियोगिता तदवच्छेदकसम्बन्धेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्नाधेयतानिरूपकाधिकरणत्वं वक्तव्यमिति भावः । तथा च तादृशसाध्याभावस्य यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावो निखिलसाध्यस्वरूपः स एव सम्बन्धो निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकः तेनैव सम्बन्धेन साध्याभावाधिकरणत्वमित्याशयः । इत्थञ्च घटत्वात्यन्ताभाववान् घटान्योन्याभाववान् वा पटत्वादित्यादौ घटत्वाऽत्यन्ताभावाभावाभावस्य, घटान्योऽन्याभावाभावाभावस्य वा (साध्याभावाभावस्य तृतीयाभावस्येति यावत्) साध्याऽभिन्नत्वेन तृतीयाभावप्रतियोगी यदि द्वितीयाभावस्तदा तृतीयाभावा (साध्यद्वितीयाभावा) भिन्नसाध्यस्यापि प्रतियोगी द्वितीयाभावः (साध्याभावः) घटत्वात्यन्ताभावाभावः, घटान्योन्याभावाभावश्च घटत्वस्वरूपः तन्निष्ठा साध्यसामान्यीय ( निखिलसाध्यनिरूपिता ) प्रतियोगिता तदवच्छेदकसम्बन्धः समवायः तेनैव निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदक (समवाय) सम्बन्धेन साध्याभावस्य घटत्वस्वरूपस्य अधिकरणे घटे पटत्वहेतोरसत्त्वेन लक्षणसङ्गतिः । प्रतियोगिताविशेषणं साध्यसामान्यीयप्रतियोगिताविशेषणम् । तादृशसम्बन्धश्चेति । निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धश्चेत्यर्थः । एवञ्च भावसाध्यकस्थले=वह्निमान् धूमादित्यादौ विशेषणताविशेष एव=स्वरूपसम्बन्ध एव । संयोगेन वह्न्यभावस्य यः स्वरूपेणाभावः= वह्निस्वरूपः तन्निरूपितप्रतियोगितावच्छेदकसम्बन्धत्वस्य स्वरूपे सत्त्वमिति भावः । एवञ्च गुणत्ववान् ज्ञानत्वादित्यादौ सर्वत्र भावसाध्यकस्थले प्रोक्तरीत्या नाव्याप्तिरिति भावः ।

अथ वृत्त्यन्तस्य साध्यीयप्रतियोगिताविशेषणत्वेऽपि सामञ्जस्यसम्भवे सामा-

माथुरी

म्बन्धेन योऽभावः सोऽपि प्रमेयतया साध्यान्तर्गतस्तदीयप्रतियोगिताव-च्छेदककालिकादिसम्बन्धेन साध्याभावाधिकरणे ज्ञानत्वादेर्वृत्तेरव्याप्ति-वारणाय सामान्यपदोपादानम् ।

चन्द्रिका

न्यपदं व्यर्थमिति साध्यसामान्यीयप्रतियोगिताविशेषणफलमाह—समवायेति । अत्र प्रमेयादीत्यादिपदाद्वाच्यादिपरिग्रहः । ज्ञानत्वादीत्यत्रादिपदेन इच्छात्वादिपरिग्रहः । कालिकादीत्यत्र च दिक्कृतविशेषणताग्रहो वोध्यः । एवञ्च सामान्यपदानुक्तौ समवायविषयित्वादिसम्बन्धेन प्रमेयादिसाध्यकज्ञानत्वादिसद्धेतौ निरुक्तप्रमेयाभावस्य कालिकेन योऽभावः सोऽपि = समवायावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽपि । प्रमेयतया = यत्किञ्चित्प्रमेय-तया ( सर्वस्यैव वस्तुनः प्रमेयरूपत्वान्निरुक्ताभावस्यापि यत्किञ्चित्प्रमेय-स्वरूपत्वमिति भावः ) । साध्यान्तर्गत इति । यत्किञ्चित्प्रमेयात्मक-साध्यरूप इत्यर्थः । तदीयेति । साध्याभाववृत्तियत्किञ्चित्साध्यप्रतियोगिताव-च्छेदककालिकसम्बन्धेनेत्यर्थः । अव्याप्तिरिति । साध्याभावस्याभावो येन सम्बन्धेन गृह्यते स एव साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकसम्बन्धः । प्रकृते च साध्या-भावस्या ( प्रमेयाभावस्या ) भावः = कालिकेन गृह्यत इति निरुक्तसाध्याभाववृत्ति-साध्यीयप्रतियोगितावच्छेदककालिकसम्बन्धेन निरुक्त ( साध्यतावच्छेदकसमवाय-सम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताक ) साध्याभावस्या ( प्रमे-याभावस्या ) धिकरणे ( कालिकसम्बन्धेन जन्यमात्रं सर्वपदार्थाधिकरणमिति निय-मेन ) जन्यज्ञाने ज्ञानत्वहेतोः सत्त्वेनाऽव्याप्तिरेवं विषयितासम्बन्धेनाऽपि साध्यतायां स्यादित्यत आह—सामान्यपदोपादानमिति । तदुपादाने तु समवायादिना प्रमे-याभावस्य कालिकेन योऽभावः स न साध्य= प्रमेयसामान्यस्वरूपः किन्तु यत्किञ्चित्साध्यरूप एव । साध्यसामान्यस्वरूपस्तु समवायादिना साध्या-भावस्य स्वरूपसम्बन्धेनाभाव एव । एवञ्च तदवच्छेदकस्वरूपसम्बन्धेन निरुक्तसाध्याभावस्याधिकरणे सामान्यादौ ज्ञानत्वहेतोरसत्त्वान्नाऽव्याप्ति-रिति भावः । साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यीयप्रतियोगितानिवेशे प्रकृते दो-षाभावात् विषयितासम्बन्धेन साध्यत्वानुधावनम् । ननु किं तावत्साध्यसामान्यीयत्व-मित्याकाँक्षायां यावत्साध्यनिरूपितत्वमित्यर्थकरणे यत्रैकव्यक्तिकं साध्यं तत्र यथा एतद्रूपवानेतद्रसादित्यादौ यावत्साध्याऽप्रसिद्ध्याऽव्याप्तिः स्यादित्यत आह—स्वानि-रूपकेति । स्वं = प्रतियोगित्वं तस्याऽनिरूपकं साध्यं यस्य एवंभूतं यद्यत्त्वं ताव-

**माथुरी**

साध्यसामान्यीयत्वञ्च यावत्साध्यनिरूपितत्वं स्वानिरूपकसाध्यक-भिन्नत्वमिति यावत्। अस्यैकोक्तिमात्रपरतया गौरवस्याऽदोषत्वात्। अनुमितिकारणतावच्छेदके च भावसाध्यकस्थलेऽभावीयविशेषणताविशेषेण साध्याभावाधिकरणत्वम्।

अभावसाध्यकस्थले च यथायथं समवायादिसम्बन्धेन साध्याभावा-

**चन्द्रिका**

द्भेदकूटवत्त्वं प्रतियोगित्वनिष्ठं यावत्साध्यनिरूपितत्वमित्यर्थः। वह्निमान् धूमादित्यादौ घटादिनिष्ठप्रतियोगित्वमेव स्वपदेन ग्राह्यं न तु स्वरूपसम्बन्धावच्छिन्नवह्न्यभावनिष्ठप्रतियोगित्वं तस्य वह्न्यभावाभावात्मकवह्निरूपसाध्यनिरूपितत्वेन तदनिरूपकत्वस्य तत्राऽसत्त्वात्। किन्तु तादृशोदासीनघटादिनिष्ठप्रतियोगित्वान्यत्वस्य वह्न्यभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वे सत्त्वेन स्वरूपसम्बन्धावच्छिन्नवह्न्यभावनिष्ठप्रतियोगित्वस्य यावत्साध्यनिरूपितत्वं सम्भवतीति साध्यस्वरूपाभावो यद्यत्प्रतियोगित्वस्यानिरूपकः तत्तदन्यत्वविशिष्टप्रतियोगित्वमेव यावत्साध्यनिरूपितप्रतियोगित्वमिति फलितार्थः। एवञ्च प्रकृते स्वपदेन कालिकसम्बन्धावच्छिन्नसाध्याभाव ( प्रमेयाभाव ) निष्ठा प्रतियोगिता ग्राह्या तस्या अनिरूपकं साध्यं यस्याः साऽपि कालिकसम्बन्धावच्छिन्नसाध्याभावनिष्ठैव प्रतियोगिता भवेत् ( स्वस्याः स्वनिरूपकत्वाभावात् ) तद्भिन्ना स्वरूपसम्बन्धावच्छिन्नसाध्याभावनिष्ठा प्रतियोगिता तादृशसाध्याभाव ( प्रमेयाभाव ) वृत्तिसाध्यसामान्यीय ( निखिलसाध्यनिरूपित ) प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन साध्याभावाधिकरणं न ज्ञानरूपहेत्वधिकरणं ( यत्र समवायविषयितादिसम्बन्धेन प्रतियोगी वर्तते तत्र स्वरूपसम्बन्धेन प्रतियोग्यभाववृत्तौ विरोधात् ) किन्तु घटादिकमेव तत्र हेतुतावच्छेदकसमवायसम्बन्धेन ज्ञानत्वहेतोरसत्त्वान्नाव्याप्तिरिति दिक्। नन्वनन्तस्वरूपसमवायादीनां सम्बन्धत्वकल्पने गौरवात्, गौरवज्ञानस्य च कारणताग्रहप्रतिबन्धकत्वात्तत्र कारणताग्रहो न सम्भवतीत्यत आह- अस्येति। एकोक्तिमात्रपरतया=निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकत्वरूपैकोक्तिपरतया। एवं तादृशप्रतियोगितावच्छेदकत्वरूपानुगतधर्मेण यत्र यस्य संसर्गस्य बोधस्तत्र तदिच्छयोच्चरिततयेत्यर्थः। अनुमितिकारणतेति। अनुमितिनिरूपितव्याप्तिज्ञाननिष्ठकारणतायाः विषयतयाऽवच्छेदकीभूतव्याप्तावित्यर्थः। एवञ्च भावसाध्यकस्थले साध्याभावस्याऽभावरूपत्वेन स्वरूपसम्बन्धावच्छिन्नैव साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगिता भवेत्। अभावसाध्यकस्थले च साध्याभावस्य भावरूपत्वेन

माथुरी

धिकरणत्वमुपादेयम् । साध्यसाधनभेदेन कार्यकारणभावभेदात् । न च तथापि घटान्योऽन्याभाववान् पटत्वादित्यत्राऽन्योन्याभावसाध्यकस्थले घटत्वादिरूपे साध्याभावे न साध्यप्रतियोगित्वम्, न वा समवायादिसम्बन्धस्तदवच्छेदकस्तादात्म्यस्यैव तदवच्छेदकत्वादित्यव्याप्तिस्तदवस्थेति वाच्यम्। अत्यन्ताभावाभावस्य प्रतियोगिरूपत्वेन घटभेदस्य घटभेदात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावरूपतया घटभेदात्यन्ताभावरूपस्य घटभेदप्रतियोगितावच्छेदकीभूतघटत्वस्यापि समवायसम्बन्धेन घटभेदप्रतियोगित्वात् ।

चन्द्रिका

यथायथं समवायादिसम्बन्धावच्छिन्नैवं साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगिता भवेदित्याशयेनाह—साध्यसाधनभेदेनेति ।

न च तथापीति—ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वविवक्षायामपि घटाऽन्योन्याभाववान् पटत्वादित्यादिभेदसाध्यकसद्धेतौ— अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वेन प्रकृते घटत्वादिरूपे साध्याभावे साध्यसामान्यीयप्रतियोगित्वाभावात् ( घटान्योन्याभावत्वनिष्ठनिरूपकतानिरूपितप्रतियोगितायाः घट एव सत्त्वात् घटत्वे तदवच्छेदकत्वात् ) अव्याप्तेरन्योन्याभावाभावस्य प्रतियोगिस्वरूपत्वाङ्गीकारमते वारणसम्भवेऽपि अन्योन्याभावीयप्रतियोगितायाः तादात्म्यसम्बन्धेनैवावच्छेदात् तादृशसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटभिन्नं घटत्वत्वादित्यत्र तादृशसाध्याभावाधिकरणे घटत्वेऽपि घटत्वत्वरूपहेतोः सत्त्वादव्याप्तिः स्यादित्यत आह—अत्यन्ताभावाभावस्येति । अत्यन्ताभावाभावस्य प्रतियोगिस्वरूपत्वनियमेन यथा घटात्यन्ताभावाभावो घटस्वरूपः तथा घटभेदत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावाभावोऽपि घटभेदात्मकप्रतियोगिस्वरूपः स्यात्तथा च घटभेदस्य स्वाभावाभावरूपात्यन्ताभावाभिन्नत्वेन घटभेदोऽप्यत्यन्ताभावरूप एव पर्यवसित इति तदभावस्य ( घटभेदात्यन्ताभावस्य ) घटत्वरूपत्वेऽपि प्रतियोगिस्वरूपत्वं समवायादिसम्बन्धावच्छिन्नत्वञ्च निर्विवादतया सिध्यतीति तादृशसाध्याभाव ( घटभेदात्यन्ताभाव = घटत्व ) वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसमवायसम्बन्धेन साध्याभावा ( घटभेदात्यन्ताभाव = घटत्वा ) धिकरणे घटे घटत्वत्वहेतोरवृत्त्या नाव्याप्तिरन्योऽन्याभावसाध्यक-

माथुरी

न चान्यत्रात्यन्ताभावाभावस्य प्रतियोगिरूपत्वेऽपि घटादिभेदात्यन्ताभावत्वावच्छिन्नाभावो न घटादिभेदस्वरूपः, किन्तु तत्प्रतियोगितावच्छेदकीभूतघटत्वात्यन्ताभावस्वरूप एवेति सिद्धान्त इति वाच्यम्। यथा हि घटत्वावच्छिन्नघटवत्ताग्रहे घटात्यन्ताभावाऽग्रहात् घटात्यन्ताभावाभावव्यवहाराच्च घटात्यन्ताभावाभावो घटस्वरूपस्तथा घटभेदवत्ताग्रहे घटभेदात्यन्ताभावाऽग्रहात् घटभेदात्यन्ताभावाऽभावव्यवहाराच्च घटभेद एव तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभाव इति तत्सिद्धान्तो न युक्तिसह इति।

विनिगमकाभावेनापि घटत्वत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववद् घटभेदस्यापि घटभेदात्यन्ताभावाभावत्वसिद्धेरप्रत्यूहत्वाच्च। अत एव तादृशसिद्धान्तो न उपाध्यायसम्मतः।

अत एव च—"अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इत्याचार्याः। अन्यथा घटभेदात्यन्ताभावप्रतियोगिनि घटभेदे तल्लक्षणाव्याप्त्यापत्तेः।

चन्द्रिका

स्थल इति भावः। घटात्यन्ताभावाभावो घटस्वरूपो भवतु घटभेदाभावाभावस्तु न घटभेदस्वरूपः किन्तु घटत्वात्यन्ताभावरूप एवेत्याशयवानाशङ्कते न चेति। समानन्यायेन समाधत्ते--यथा हीति। यथा संयोगादिसम्बन्धावच्छिन्नघटत्वावच्छिन्नघटनिष्ठप्रकारतानिरूपितभूतलादिविशेष्यताकनिश्चये सति घटात्यन्ताभावनिष्ठप्रकारतानिरूपितभूतलादिविशेष्यताकप्रतीतिर्न भवति, विरोधात्। किन्तु घटवद्भूतलमिति ज्ञाने सति घटात्यन्ताभावाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलविशेष्यताकज्ञानं जायतेऽविरोधादिति घटात्यन्ताभावाभावो घटस्वरूपः, तथा घटभेदनिष्ठप्रकारतानिरूपितपटादिविशेष्यताकनिश्चये सति घटभेदाभावनिष्ठप्रकारतानिरूपितपटादिविशेष्यताकप्रतीतिर्न जायते विरोधादेव, किन्तु घटभेदाभावाभावनिष्ठप्रकारताकपटादिविशेष्यकताकप्रतीतिर्जायत एव, तयोरविरोधात्, एवञ्च घटभेदाभावाभावोऽपि घटभेदस्वरूप एवेति घटभेदाभावाभावस्य घटत्वात्यन्ताभावत्वप्रतिपादकसिद्धान्तो न युक्तियुक्त इति भावः। अत एवेति। अभावाभावस्य प्रतियोगिस्वरूपत्वेन घटभेदस्यापि घटभेदात्यन्ताभावाभावत्वसिद्धेरप्रत्यूहत्वादेवेत्यर्थः। पूर्वपक्षिसिद्धान्तो न यज्ञपत्युपाध्यायसम्मतः। अत एव = अभावाभावस्य (घटभेदाभावाभावस्य) प्रतियोगिस्वरूपत्वादेव। अभावविरहात्मत्वम् = घटाद्यत्यन्ताभावाभावः आत्मा = स्वरूपं यस्य तत्त्वम्। वस्तुनः = घटस्य प्रतियोगिता = घटस्वरूपमिति

माथुरी

अन्योऽन्याभावप्रतियोगितावच्छेदकात्यन्ताभावे तल्लक्षणातिव्याप्त्यापत्तेश्च। न चैवं घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्यापि घटभेदस्वरूपत्वापत्तिरिति वाच्यम्।

तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावस्यैव तत्स्वरूपत्वाभ्युपगमात्, तद्वत्ताग्रहे तादृशतदत्यन्ताभावाभावस्यैव व्यवहारात्। उपाध्यायैर्घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्य घटभेदस्वरूपत्वाभ्युपगमाच्च।

न चैवं साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्ष्यताम्, किं साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वस्य प्रतियोगिताविशेषणत्वेनेति वाच्यम्। कालिकसम्बन्धाव-

चन्द्रिका

यावत्। तथा चात्यन्ताभावाभावः प्रथमाभाव (घटाद्यभाव) प्रतियोगि (घट) स्वरूपो भवतीति फलितार्थः न्यायकुसुमाञ्जलावुदयनाचार्येण स्वीकृतः। अन्यथा= अभावाभावस्य प्रतियोगिस्वरूपत्वानङ्गीकारे। घटभेदात्यन्ताभावप्रतियोगिनि घटभेदे। तल्लक्षणाव्याप्त्यापत्तेः= अभावविरहात्मत्वमित्याचार्यलक्षणस्याव्याप्त्यापत्तेः। घटभेदाभावाभावस्य घटत्वात्यन्ताभावस्वरूपत्वादिति भावः। अन्योऽन्याभाव- (घटान्योन्याभाव) प्रतियोगितावच्छेदकघटत्वाभावे तल्लक्षणस्य= घटभेदाभावप्रतियोगित्वलक्षणस्य। अतिव्याप्त्यापत्तेः, घटभेदाभावाभावत्वस्य तन्मते घटत्वाभावे सत्त्वादिति भावः। न चैवमिति। एवम्= घटभेदाभावाभावस्य (घटत्वाभावस्य) घटभेदस्वरूपत्वे। घटभेदत्वापत्तिः= घटान्योन्याभावत्वापत्तिः। समाधत्ते-- तदत्यन्तेति। घटभेदात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावस्यैवेत्यर्थः। तत्स्वरूपत्वाभ्युपगमात्= घटभेदस्वरूपत्वाभ्युपगमात्। युक्तिमाह-- तद्वत्तेति। घटभेदनिष्ठप्रकारतानिरूपितपटादिविशेष्यताकनिश्चये सति। तादृशेति। घटभेदाभावत्वावच्छिन्नप्रतियोगिताकाभाववानित्येव व्यवहारो भवति न तु घटत्वात्यन्ताभाववानिति व्यवहार इति भावः। समनियताभावानामैक्यमिति वादिनां मतमाह-- उपाध्यायैरिति। यज्ञपत्युपाध्यायैः।

न चैवमिति। एवम्= अत्यन्ताभावाभावस्य प्रतियोगिस्वरूपत्वे। साध्यसामान्यीयेति। ननु साध्याभाववृत्ति (स्वानिरूपकभिन्नरूप) साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वविवक्षायामपि पूर्वोक्तान्योन्याभावात्यन्ताभावसाध्यकस्थलेऽव्याप्त्यसम्भवेनैव सकलेष्टसिद्धौ किं साध्याभावघट-

**माथुरी**

च्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य विशेषणताविशेषेण साध्यत्वे आत्मत्वहेतावव्याप्त्यापत्तेः ।

कालिकसम्बन्धावच्छिन्नसाध्याभावस्य विशेषणताविशेषेण योऽभाव-स्तस्यापि साध्यस्वरूपतया कालिकसम्बन्धवत् विशेषणताविशेषोऽपि साध्यीयप्रतियोगितावच्छेदकसम्बन्धस्तेन सम्बन्धेनात्मत्वप्रकारकप्रमावि-शेष्यत्वरूपसाध्याभाववत्यात्मनि हेतोरात्मत्वस्य वृत्तेः ।

**चन्द्रिका**

कीभूतसाध्यनिष्ठप्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नविशेषणत्वेनेत्यत आह—कालिकेति । अत्र नित्ये कालिकायोगादिति नियमेन कालिकसम्बन्धावच्छि-न्नात्मत्वनिष्ठप्रकारतानिरूपितप्रमाविशेष्यतात्वावच्छिन्नप्रतियोगिताकाभावस्य स्वरूप-सम्बन्धेनात्मनि सत्त्वेन तत्रात्मत्वहेतोः सत्त्वात्सद्धेतावव्याप्तिः ।

तथा हि—साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वानुपादाने साध्यता-वच्छेदकस्वरूपसम्बन्धं विहाय कालिकसम्बन्धेन साध्या (आत्मत्वप्रकारकप्रमाविशेष्य-त्वाभावा) भावं ग्रहीतुं शक्यतया, कालिकेन साध्याभावस्य स्वरूपेण योऽभावस्त-स्यापि साध्यस्वरूपत्वेन तन्निरूपित (तृतीयाभावनिरूपित) साध्याभाववृत्तिप्रतियोगिता-वच्छेदक (साध्याभावस्याभावो येन सम्बन्धेन गृहीतस्तादृश) स्वरूपसम्बन्धेन साध्याभावस्या (आत्मत्वप्रकारकप्रमाविशेष्यत्वरूपस्या) धिकरणे हेतोः = आत्मत्वस्य सत्त्वेनाव्याप्तिः स्यादेव । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वो-पादाने तु साध्यतावच्छेदकस्वरूपसम्बन्धेन साध्याभावस्य कालिकेन योऽभावः स एव साध्यस्वरूपः (आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावरूपः) तन्निरूपितसाध्याभाव-वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकः प्रागुक्तरीत्या कालिकसम्बन्ध एव तेन सम्ब-न्धेन साध्याभावाधिकरणं न नित्य आत्मादिः किन्तु घटादिकमेव तत्र च हेतोरात्मत्व-स्याऽसत्त्वेन लक्षणसङ्गतिः । एवं साध्यतावच्छेदकधर्मावच्छिन्नसाध्याभाववृत्तित्वानु-पादानेऽपि तत्रैव कालिकसम्बन्धावच्छिन्नात्मत्वरूपावच्छेदकांशं परित्यज्य केवलं विशेष्यत्वाभावाभावांशं साध्याभावमादाय तस्य विशेष्यत्वरूपस्याधिकरणे = आत्मनि हेतोरात्मत्वस्य वृत्तितयाऽव्याप्तिः स्यादिति तदुपादानम् ।

ननु अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वे अयं घट एतत्त्वादि-त्यादौ तादात्म्येन साध्यतायां साध्यतावच्छेदक (तादात्म्य) सम्बन्धावच्छिन्नप्रतियो-गिताकसाध्याभावस्य = घटभेदस्य स्वरूपसम्बन्धेन योऽभावस्तस्य घटत्वस्वरूपतया तत्र (साध्यस्य साध्याभावाभावस्य चैक्यविरहेण साध्याभावरूपे घटभेदे)

माथुरी

प्रतियोगितावच्छेदकवत् प्रतियोग्यप्यन्योऽन्याभावाभावः, तेन तादात्म्यसम्बन्धेन साध्यतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वस्य नाऽप्रसिद्धिः। इत्थञ्चात्यन्ताभावत्वनिरूपितत्वेनाऽपि साध्यसामान्यीयप्रतियोगिता विशेषणीया। अन्यथा घटान्योन्याभाववान् घटत्वत्वादित्यादावव्याप्त्यापत्तेः। तादात्म्यसम्बन्धस्यापि साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकत्वात्।

यद्वा—साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामा-

चन्द्रिका

साध्यप्रतियोगित्वविरहात् साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वाऽप्रसिद्धयाऽव्याप्तिरत आह-- प्रतियोगितावच्छेदकवदिति। तथा सति साध्यस्य (घटस्य) साध्याभावाभाव (घटभेदाभाव) स्वरूपत्वेन साध्याभावाभावप्रतियोगितायां साध्यप्रतियोगित्वस्याक्ततया साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगिताप्रसिद्धया नाऽव्याप्तिरिति भावः। प्रतियोगितावच्छेदकवत्प्रतियोग्यपीत्यत्रापिना वतिप्रत्ययेन चान्योन्याभावाभावस्योभयस्वरूपत्वमङ्गीक्रियते, अन्यथाऽनुपदवक्ष्यमाणाव्याप्त्यलग्नतापत्तेः।

इत्थञ्चेति— अन्योऽन्याभावात्यन्ताभावस्य प्रतियोगिस्वरूपत्वे चेत्यर्थः। अन्यथेति। साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितायाः अत्यन्ताभावत्व-(साध्याभावात्यन्ताभावत्व) निरूपितत्वाऽप्रवेशे सतीत्यर्थः। एवञ्च घटान्योऽन्याभाववान् घटत्वत्वादित्यादिसद्धेतावव्याप्तिः, तथा हि घटान्योऽन्याभावाभावभेदस्य (तृतीयाभावस्य प्रथमाभावस्वरूपत्वनियमेन) घटान्योन्याभावस्वरूपत्वात् प्रागुक्तरीत्या साध्याभावरूप (घट) वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन साध्याभावस्य (घटान्योन्याभावाभावस्य = घटत्वस्वरूपस्य) अधिकरणं घटत्वमेव तत्र घटत्वत्वहेतोः सत्त्वेन भवत्यव्याप्तिः। साध्याभाववृत्तिप्रतियोगिताया अत्यन्ताभावत्वनिरूपितत्वप्रवेशे तु साध्याभावाभावस्य तादात्म्यसम्बन्धेन (अत्यन्ताभावत्वनिरूपितप्रतियोगितायास्तादात्म्यसम्बन्धानवच्छिन्नतया) ग्रहीतुमशक्यत्वात् न तादात्म्यसम्बन्धः साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकः किन्तु समवायादिकमेव तथेति समवायेन साध्याभावाधिकरणं घट एव तत्र घटत्वत्वहेतोरसत्त्वेन नाव्याप्तिरिति भावः।

ननु भावपदार्थात्यन्ताभावाभावस्य प्रतियोगिस्वरूपत्वेऽपि, अन्योन्याभावाभावाभावस्य न भेदरूपप्रतियोगिस्वरूपत्वं किन्तु प्रतियोगितावच्छेदकात्यन्ताभावस्वरूपत्वमेव तथा च सर्वत्रान्योऽन्याभावसाध्यकस्थले साध्यस्य साध्याभावाभावस्य चैक्यविरहेण सा-

### माथुरी

न्यीयनिरुक्तप्रतियोगित्व-तदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्षणीयम् । वृत्त्यन्तमन्यतरविशेषणम् । एवञ्च घटान्योन्याभाववान् पटत्वादित्यादौ साध्याभावस्य घटत्वादेः साध्यीयप्रतियोगित्वविरहेऽपि न क्षतिः, तादृशान्यतरस्य साध्यीयप्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वात् । न च तथापि कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकसद्धेताव्याप्तिरिति वाच्यम् । निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या निरुक्तसम्बन्धसंसर्गकनिरवच्छिन्नाधिकरणता तदाश्रयावृत्तित्वस्य विवक्षितत्वात् ।

### चन्द्रिका

ध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिरतोऽन्यमत आह—यद्वेति । एवञ्च घटान्योन्याभाववान् पटत्वादित्यादिसद्धेतौ घटान्योन्याभावाभावरूपसाध्याभावे=घटत्वे साध्यीयप्रतियोगितायाः विरहेऽपि तादृशान्यतरमध्यपातिसाध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धमादाय लक्षणसङ्गतिः । निरुक्तेत्यस्यात्यन्ताभावत्वनिरूपितेति बोध्यम् । तेन न पूर्वोक्ताव्याप्तिरिति भावः । न च तथापीति । उक्तान्यतरावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वविवक्षायामपीत्यर्थः । अव्याप्तिरिति । मूलावच्छेदेन कपिसंयोगाभावाधिकरणे वृक्षे एतद्वृक्षत्वरूपहेतोः सत्त्वेनाव्याप्तिरित्यत आह—निरुक्तेति । अत्र प्रथमनिरुक्तस्य=साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वमर्थः । द्वितीयनिरुक्तस्य=साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्ति–अत्यन्ताभावत्वनिरूपितसाध्यसामान्यीयप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छेदकत्वमर्थः । वृत्तित्वञ्चान्यतरविशेषणम् । इत्थञ्च— साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्त्यत्यन्ताभावत्वनिरूपितसाध्यसामान्यीयप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धावच्छिन्ना या साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्ना निरूपकता तन्निरूपिता या निरवच्छिन्नाधिकरणता तदाश्रयावृत्तित्वमिति संकलितार्थः । अत्र च निरवच्छिन्नसाध्याभावाधिकरणत्वप्रवेशात् कपिसंयोगाभावस्य निरवच्छिन्नाधिकरणं गुणादिकमेव न तु वृक्ष इति तादृशसाध्याभावनिरूपिता या निरवच्छिन्ना गुणादिनिष्ठाधिकरणता तदाश्रयवृत्तित्वाभावस्यैतद्वृक्षत्वरूपहेतौ सत्त्वेन कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्य-

## माथुरी

गुणकर्मान्यत्वविशिष्टसत्त्वाभाववान् गुणत्वादित्यादौ सत्त्वात्मकसाध्याभावाधिकरणत्वस्य गुणादिवृत्तित्वेऽपि साध्याभावत्वविशिष्टनिरूपिताधिकरणत्वस्य गुणाद्यवृत्तित्वान्नाऽव्याप्तिः ।

न चैवं कपिसंयोगाभाववान्सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवास्य दोषस्य वक्ष्यमाणत्वात् ।

न च तथापि कपिसंयोगिभिन्नं गुणत्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिः, अन्योऽन्याभावस्य व्याप्य-

## चन्द्रिका

केऽपि सद्धेतौ न पूर्वोक्तदोष इति भावः । निरुक्तसाध्याभावत्वविशिष्टाधिकरणत्वप्रवेशफलमाह—गुणकर्मान्यत्वेति । नाव्याप्तिरिति । तथा हि—शुद्धविशिष्टयोरैक्येन सत्त्वात्मकसाध्याभावाधिकरणत्वस्य गुणादिवृत्तित्वेनाव्याप्तिसम्भवेऽपि विशिष्टशुद्धसत्त्वनिष्ठावच्छेदकःवयोर्भिन्नतया साध्यता ( गुणकर्मान्यत्वविशिष्टसत्ताऽभावा ) वच्छेदकसम्बन्धा ( स्वरूपसम्बन्धा ) वच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाव (गुणकर्मान्यत्वविशिष्टसत्त्वाभावाभाव = गुणकर्मान्यत्वविशिष्टसत्ता) वृत्ति–अत्यन्ताभाव (तृतीयाभाव) त्व-निरूपितसाध्यसामान्यीयप्रतियोगितावच्छेदकसमवायसम्बन्धेन तादृशगुणकर्मान्यत्वविशिष्टसत्तात्वरूपसाध्याभावत्वावच्छिन्नस्याधिकरणं द्रव्यमेवेति तत्र गुणत्वहेतोरवृत्त्या न कोऽपि दोषः साध्याभावत्वविशिष्टनिरूपिताधिकरणत्वप्रवेशेनेति भावः । न चैवमिति । एवम् = निरवच्छिन्नसाध्याभावाधिकरणतायाः प्रवेशे । कपिसंयोगाभावाभावरूपसाध्याभावस्य कपिसंयोगरूपत्वेनाव्याप्यवृत्तितया निरवच्छिन्नाधिकरणताया अप्रसिद्ध्याऽव्याप्तिरिति भावः । सत्त्वादित्यादावित्यादिपदेन प्रमेयत्वादिपरिग्रहः । कपिसंयोगाभावस्याऽव्याप्यवृत्तितया द्रव्येऽन्यत्र च विद्यमानत्वेन केवलान्वयित्वमत्तत्न्तेनाग्रे केवलान्वयिसाध्यकसद्धेतावत्राव्याप्तिदानं साधु सङ्गच्छते । केवलान्वयिन्नीति । पञ्चानां लक्षणानां केवलान्वयिन्यव्याप्त्या सिद्धान्तलक्षणं सार्थकमिति भावः । ग्रन्थकृतैव = मणिकृतैव । न च तथापि = निरुक्तकेवलान्वयिसाध्यकेऽव्याप्तेरावश्यकत्वेऽपि । अव्याप्तिरिति । एवञ्च कपिसंयोगिभेदवान् गुणत्वादित्यत्र साध्याभावस्य ( कपिसंयोगिभेदाभावस्य ) साध्यीयप्रतियोगितावच्छेदक ( कपिसंयोग ) स्वरूपत्वेन तस्य निरवच्छिन्नाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिः स्यादेवेति भावः । तस्य = कपि-

### माथुरी

वृत्तित्वनियमवादिनये तस्य केवलान्वय्यनन्तर्गतत्वादिति वाच्यम्। अन्योन्याभावस्य व्याप्यवृत्तित्वनियमवादिनये अन्योन्याभावान्तरात्यन्ताभावस्य प्रतियोगितावच्छेदकस्वरूपत्वेऽप्यव्याप्यवृत्तिमदन्योन्याभावाभावस्य व्याप्यवृत्तिस्वरूपस्याऽतिरिक्तस्याभ्युपगमात्। तच्चाग्रे स्फुटीभविष्यति।

ननु तथापि समवायादिना गगनादिहेतुके इदं वह्निमद् गगनादित्यादावतिव्याप्तिः। वह्न्यभाववति हेतुतावच्छेदकसमवायादिसम्बन्धेन गगनादेरवृत्तेः। न च तल्लक्ष्यमेव, हेतुतावच्छेदकसम्बन्धेन पक्षधर्मत्वा-

### चन्द्रिका

संयोगिभेदरूपसाध्यस्य। केवलान्वय्यनन्तर्गतत्वादिति। प्राचीनमते भेदस्य व्याप्यवृत्तित्वेन कपिसंयोगिभेदस्य स्वप्रतियोगितावच्छेदककपिसंयोगवति द्रव्ये वृत्तित्वविरहात् सकलपदार्थवृत्त्यत्यन्ताभावाऽप्रतियोगित्वरूपकेवलान्वयिलक्षणानाक्रान्ततया न केवलान्वयित्वं तस्येति हृदयम्। समाधत्ते—अन्योन्येति। अन्योन्याभावान्तरेति। कपिसंयोग्यादिभेदातिरिक्तो यो घटादिभेदस्तदत्यन्ताभावस्य प्रतियोगितावच्छेदकघटत्वादिस्वरूपत्वेऽपि, अव्याप्यवृत्तिमद् ( कपिसंयोग्यादि ) अन्योन्याभावाभावस्य व्याप्यवृत्तिस्वरूपस्य= अनवच्छिन्नवृत्तिकस्य। अतिरिक्तस्याऽभ्युपगमादिति। भावस्वरूपातिरिक्तस्याभावस्वरूपस्य ( कपिसंयोगिभेदाभावरूपस्य ) स्वीकारात्। तेनाव्याप्यवृत्तिमदन्योन्याभावाभावस्य व्याप्यवृत्तिस्वरूपस्यावच्छेदकाऽसम्भवेन द्रव्य एव निरवच्छिन्नसाध्याभावाधिकरणत्वप्रसिद्ध्या नाव्याप्तिरुक्तस्थल इति भावः। तच्च= कपिसंयोगानात्मकस्य कपिसंयोगिभेदाभावस्य व्याप्यवृत्तिस्वरूपत्वञ्च। अग्रे= चतुर्थलक्षणव्याख्यानावसरे।

ननु तथापीति। प्रोक्तरीत्यान्यतरावच्छेदकसम्बन्धेन निरवच्छिन्नसाध्याभावाधिकरणत्वविवक्षायामुक्ताव्याप्तिदोषाणां वारणसम्भवेऽप्यतिव्याप्तिदोषः स्यादेवेत्यर्थः। समवायादिनेति। समवायसम्बन्धेन गगनस्य कुत्राप्यवृत्तितया साध्याभावाधिकरणे सुतरामवृत्तित्वं स्यादिति भावः। कालिकसम्बन्धेन पदार्थमात्रस्य महाकाले वर्तमानत्वेन दोषाभावात् समवायेत्युक्तम्। अत्र समवायादिनेत्यादिना संयोगादिर्बोध्यः। गगनादीत्यादिना आत्मादिग्रहः। तेन संयोगेनात्मादिहेतुकेऽप्यतिव्याप्तिर्बोध्या। पक्षधर्मत्वाभावाच्चेति। प्रायशः साध्यापेक्षयाऽधिकदेशवृत्तिहेतावेवासद्धेतुत्वव्यवहारात् प्रकृते समवायेन गगनादिहेतोः तथात्वाऽभावेऽपि केवलं पर्वतादिरूपपक्षनिरूपितवृत्तित्वाभावेन पक्षतासम्पत्त्यभावादेवासद्धेतुत्वव्यवहार इति तात्पर्यम्।

माथुरी

भावाच्चाऽसद्धेतुत्वव्यवहार इति वाच्यम्। तत्रापि व्याप्तिभ्रमेणैवानुमिते-रनुभवसिद्धत्वात्। अन्यथा धूमवान् वह्नेरित्यादेरपि लक्ष्यत्वस्य सुवचत्वात्।

एवं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिः, विशिष्टसत्त्व-स्य केवलसत्त्वानतिरेकितया द्रव्यत्वाभाववत्यपि गुणादौ तस्य वृत्तेः। गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतेः सर्वसिद्धत्वात्। सत्तावान् द्रव्य-

चन्द्रिका

सद्धेतुत्वज्ञानं व्यवहर्तव्यज्ञानविधया सद्धेतुत्वव्यवहारप्रयोजकं, सद्धेतुत्वज्ञानञ्च व्याप्तिपक्षधर्मताज्ञानं, गगनादौ व्याप्तेः सत्त्वेऽपि पक्षधर्मताविरहेण व्याप्तिपक्षधर्मता-ज्ञानात्मकसद्धेतुत्वज्ञानाऽसम्भवात् न तत्र सद्धेतुत्वव्यवहारो भवितुमर्हतीति गगनादे-र्लक्ष्यत्वेऽपि लक्ष्यभावात्कथं तत्रातिव्याप्तिरित्यभिमानं निराकरोति—तत्रापीति। गगनादावपीत्यर्थः। व्याप्तिभ्रमेणैव व्याप्यभाववति व्याप्तिप्रकारकज्ञानेनैव। तथा च गगनादिकमलक्ष्यमेवेति भावः। अन्यथेति। हेतुतावच्छेदकसम्बन्धेन पक्ष-वृत्तित्वाभावादेव यद्यसद्धेतुत्वव्यवहारो भवेत्तदा धूमवान् वह्नेः, द्रव्यं सत्त्वादित्यादौ हेतुतावच्छेदकसंयोगादिसम्बन्धेन वह्न्यादिहेतोः पक्षवृत्तित्वादसद्धेतुत्वव्यवहारः सुतरां न स्यादेवञ्चालक्ष्यगगनादौ लक्षणगमनादतिव्याप्तिः स्यादेवेत्याशयः। अतिव्याप्त्य-पेक्षया प्रबलदोषोऽव्याप्तिरपीत्याशयेन, हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्त्वस्य वि-वक्षयाऽवृत्तिगगनादिहेतावतिव्याप्त्यभावेन वाऽव्याप्तिमाह—एवमिति। द्रव्यत्वाभाव-वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकस्वरूपसम्बन्धेन द्रव्यत्वत्वावच्छिन्नप्रतियोगिता-कसाध्याभावाधिकरणे गुणादौ (विशिष्टः शुद्धान्नातिरिच्यते) इति मतानुसरणे विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमात्केवलसत्त्वरूपविशेष्यवृत्तिगुण-वृत्तित्वस्याभावो न गुणकर्मान्यत्वविशिष्टसत्तायामिति विशिष्टसत्तानतिरेकिशुद्धस-त्तायास्तत्र = गुणादौ वृत्तेर्भवत्यव्याप्तिः। सर्ववादिसिद्धानुभवं प्रमाणयति—गुण इति।

ननु साध्याभावाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानवच्छेद-कहेतुतावच्छेदकवत्त्वमेव व्याप्तिरस्तु, तथा सति विशिष्टसत्तात्वरूपहेतुतावच्छेदकस्य द्रव्यत्वाभावाधिकरणगुणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितानवच्छेदकत्वात्, वि-शिष्टसत्तायाः शुद्धसत्तातिरिक्तत्वमतेऽपि वा विशिष्टसत्ताया द्रव्य एव वृत्तित्वं न तु साध्याभावा (द्रव्यत्वाभावा) धिकरणे गुणादाविति न तत्राव्याप्तिरित्यत आह—सत्तावानिति।

**माथुरी**

त्वादित्यादावव्याप्तिश्च, सत्ताभाववति सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरप्रसिद्धेरिति चेन्न । हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताप्रतियोगिकहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन निरुक्तसाध्याभाववत्त्वविशिष्टनिरूपितनिरुक्तसम्बन्धसंसर्गकनिरवच्छिन्नाधिकरणताश्रयवृत्तित्वसामान्याभावस्य विवक्षितत्वात् । वृत्तित्वञ्च न हेतुतावच्छेदकसम्बन्धेन विवक्षणीयम्। अस्ति च सत्तावान् द्रव्यत्वादित्यादौ सत्ताभावाधिकरणताश्रयवृत्तित्वस्य हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन सामान्या-

**चन्द्रिका**

अत्र साध्याभावा ( सत्ताभावा ) धिकरणे सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन पदार्थमात्रस्य वृत्तित्वाऽप्रसिद्धया ( अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् ) वृत्तित्वाभावस्याप्यप्रसिद्धया सुतरामव्याप्तिः स्यादिति भावः । समादधति—हेतुतावच्छेदकेत्यादिना । अत्र हेत्वधिकरणताप्रतियोगिकेत्यस्य हेत्वधिकरणतानिरूपितेत्यर्थः । तस्य चाधेयतायां विशेषणत्वम् । आधेयतानिरूपितेत्यस्याधेयताप्रतियोगिकेत्यर्थः । प्रथमनिरुक्तेत्यस्य = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यर्थः । द्वितीयनिरुक्तेत्यस्य = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितातदवच्छेदकत्वान्यतरावच्छेदकेत्यर्थः । एवं सति—हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणता - विशेषसम्बन्धेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावत्वविशिष्टनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धावच्छिन्ननिरूपकतानिरूपितनिरवच्छिन्नाधिकरणताश्रयवृत्तित्वसामान्याभाव इति संकलितलक्षणस्वरूपम् । अत्राधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धेनेत्यस्य निरवच्छिन्नाधिकरणताश्रयवृत्तित्वेऽन्वयः । एवञ्च सत्तावान् द्रव्यत्वादित्यत्र साध्याभाव ( सत्ताभाव ) वति सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तित्वस्याऽप्रसिद्धत्वेऽपि स्वरूपसम्बन्धेन तत्रापि वृत्तित्वप्रसिद्धया लक्षणसमन्वयः । समन्वयप्रकारश्च श्रीमन्मथुरानाथेनैव स्पष्टीकृतः । येन सम्बन्धेन प्रतियोगी स्वाधिकरणे वर्तते स समानाधिकरणसम्बन्धस्तदन्यो व्यधिकरणसम्बन्धः । यथा—गुणादिः

## माथुरी

भावो द्रव्यत्वादौ, समवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावाधिकरणत्वाश्रयवृत्तित्वाभावस्य व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावतया संयोगसम्बन्धावच्छिन्नगुणाभावादेरिव केवलान्वयित्वात्। द्रव्यं सत्त्वादित्यादौ च द्रव्यत्वाभावाधिकरणगुणादिवृत्तित्वस्यैव समवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन सत्तायां सत्त्वान्नातिव्याप्तिः। द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय प्रतियोगिकान्तमाधेयताविशेषणम्।

## चन्द्रिका

समवायादिसम्बन्धेन स्वाधिकरणे द्रव्यादौ वर्तते तदन्यः संयोगादिसम्बन्धः तेन सम्बन्धेन गुणः क्वापि न विद्यत इति भवति व्यधिकरणसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकगुणाभावः केवलान्वयी। एवं स्वावच्छेदकधर्मेतरधर्मावच्छिन्नप्रतियोगिताकाभावोऽपि केवलान्वयी, यथा—घटनिष्ठप्रतियोगित्वस्य स्वावच्छेदकधर्मः घटत्वं तदितरपटत्वावच्छिन्नप्रतियोगिताकघटाभावः केवलान्वयी। तथा प्रकृतेऽपि समवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकसामान्यादिनिरूपितवृत्तित्वाभावस्य व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावतया केवलान्वयित्वेन तादृशसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावाधिकरणसामान्यादिनिरूपितवृत्तित्वाभावस्य द्रव्यत्वे हेतौ सत्त्वेन सत्तावान् द्रव्यत्वादित्यादौ नाव्याप्तिः। अस्मिन्प्रकारेऽतिव्याप्तिरपि न भवतीति प्रदर्शयितुमाह—द्रव्यं सत्त्वादित्यादाविति। अत्र साध्याभावाधिकरणे गुणादौ समवायसम्बन्धेन वृत्तित्वप्रसिद्ध्या हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धेन साध्याभावाधिकरणगुणादिनिरूपितवृत्तित्वस्यैव सत्तायां हेतौ सत्त्वेन नातिव्याप्तिः। ननु हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धेनैव साध्याभावाधिकरणतानिरूपितवृत्तित्वसामान्याभावो विवक्ष्यतां किं हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताप्रतियोगिक (निरूपित) त्वस्य तादृशाधेयतायां विशेषणत्वेनेत्यत आह—- द्रव्यमिति। आधेयतायां तादृशविशेषणासत्त्वे द्रव्यं विशिष्टसत्त्वादित्यत्र साध्याभावा ( द्रव्यत्वाभावा ) धिकरणगुणादिवृत्तित्वस्य हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसम्बन्धेन ( विशिष्टशुद्धयोरैक्येन ) विशिष्टसत्तायामपि सत्त्वेनाऽव्याप्तिस्तदुपादाने तु हेतुतावच्छेदकविशिष्टसत्तात्वावच्छिन्नहेत्वधिकर-

**माथुरी**

वस्तुतस्तु—एतल्लक्षणकर्तृमते विशिष्टसत्त्वं विशिष्टसत्त्वनिरूपिताधारतासम्बन्धेनैव द्रव्यत्वव्याप्यम् न तु समवायसम्बन्धेन । तथा च प्रतियोगिकान्तमाधेयताविशेषणमनुपादेयमेव, तदुपादाने तु हेतुतावच्छेदकभेदेन कार्यकारणभावभेदापत्तेः । हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वे सतीत्यनेनापि विशेषणाद्वह्निमान् गगनादित्यादौ नातिव्याप्तिः । ननु तथापि उभयत्वमुभयत्रैव पर्याप्तं न त्वेकत्रेति सिद्धान्तादरे घटत्ववान् घटत्वतदभाववदुभयत्वादित्यादौ पर्य्याप्त्याख्यसम्बन्धेन हेतुत्वेऽतिव्याप्तिः, घटत्वाभाववति हेतुतावच्छेदकपर्य्याप्त्याख्य-

**चन्द्रिका**

णतानिरूपिततादृशस्वरूपसम्बन्धेन साध्याभावाधिकरणगुणवृत्तित्वाभावस्य हेतौ सत्त्वान्नाव्याप्तिरिति भावः ।

हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरूपितत्वघटितलक्षणस्य गौरवग्रस्ततया तत्परिहृत्य केवलं हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसम्बन्धेन साध्याभावाधिकरणनिरूपितवृत्तित्वसामान्याभावमात्रस्य विवक्षणेऽपि क्षत्यभाव इत्याशयेनाह—वस्तुतस्त्विति । विशिष्टनिरूपिताधारतासम्बन्धेनैव = गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणत्वसम्बन्धेनैव । तथा सति द्रव्यं विशिष्टसत्त्वादित्यत्र गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिता या अधिकरणता तस्याः द्रव्य एव वृत्तितया तादृशसम्बन्धेन साध्याभावा (द्रव्यत्वाभावा) धिकरणगुणादिनिरूपितवृत्तित्वाभावस्य विशिष्टसत्तारूपहेतौ सत्त्वेनाव्याप्तिविरहात् हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताप्रतियोगिकेति आधेयताविशेषणं न देयमित्याशयेनाह—तथा चेति । तदुपादान इति । हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतायां हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताप्रतियोगिकेति विशेषणोपादाने इत्यर्थः । कार्यकारणभावभेदापत्तेः = अनुमितिव्याप्तिज्ञानयोः कार्यकारणत्वयोर्भेदापत्तेः । कारणताभेदेन कार्यत्वस्यापि भेदादिति भावः । तथा च कार्यकारणभावभेदापत्तिगौरवभिया लाघवात् विशिष्टनिरूपिताधारत्वस्यैव हेतुतावच्छेदकसम्बन्धत्वं वरमित्याशयः । ननु निरुक्ताधेयतायां हेतुतावच्छेदकेत्यादिविशेषणासत्त्वे समवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभावाधिकरणतानिरूपितवृत्तित्वसामान्याभावस्य गगनादौ सत्त्वात्प्रागुक्ते समवायेन गगनादिहेतुके वह्निमद् गगनादित्यादावतिव्याप्तिस्तदवस्थेत्यत आह—हेतुतेति । विशेषणात् = साध्यवदवृत्तित्वाभावे हेतुतावच्छेदकसम्बन्धेन

माथुरी

सम्बन्धेन हेतोरवृत्तेः । घटो न घटपटोभयमितिवद् घटत्वाभाववान्न घटत्वतदभाववदुभयमित्यपि प्रतीतेरिति चेन्न । तादृशसिद्धान्तादरे हेतुतावच्छेदकसम्बन्धेन साध्यसमानाधिकरणत्वे सतीत्यनेनैव विशेषणीयत्वादिति । अत एव निविशतां वा वृत्तिमत्त्वं साध्यसमानाधिकरणत्वं वेति केवलान्वयिग्रन्थे दीधितिकृतः ।

केचित्तु—निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या विशेषणता-

चन्द्रिका

सम्बन्धित्वे सतीति विशेषणीयत्वात् । तथा च हेतुतावच्छेदकसमवायेन गगनादेः क्वाप्यवृत्तितया नातिव्याप्तिरिति भावः । अत्र गगनादावित्यादिपदेन समवायेनावृत्तिपदार्थकालदिगात्मनां परिग्रहः ।

शङ्कते—नन्विति । तथापि=हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वस्य विशेषणत्वेऽपि । उभयत्वमिति । उभयत्वमुभयत्रैव पर्याप्तमित्यस्यायमाशयः—उभयत्वस्योभयवृत्तिधर्मत्वेनैकत्र वृत्तित्वाऽसम्भवः, यथा घटपटोभयनिष्ठोभयत्वं न केवलं घटे न च केवलं पटे वर्तत इति भवति तस्योभयत्वावच्छिन्न एव वृत्तितेति घटत्ववान् घटत्वतदभाववदुभयत्वादित्यत्र हेतोः पर्याप्तिसम्बन्धेनाधिकरणे उभयत्र घटत्वरूपसाध्यस्यासत्त्वाद्व्यभिचारिणि निरुक्तपर्याप्तिसम्बन्धेन साध्याभाव ( घटत्वाभाव ) वति पटादौ हेतोरवृत्त्याऽतिव्याप्तिरित्यत आह–तादृशेति । उभयत्वमुभयत्रैवेति सिद्धान्तादरे हेतुतावच्छेदकसम्बन्धेन साध्यसमानाधिकरणत्वे सतीति विशेषणीयत्वात् = साध्याभावाधिकरणवृत्तित्वाभाव इति शेषः । तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावत्त्वे सति निरुक्तसाध्याभावाधिकरणवृत्तित्वाभाववत्त्वमिति लक्षणस्वरूपे निष्पन्ने प्रकृते घटत्वाभाववति तादृशोभयत्वस्यावृत्तित्वेऽपि साध्यतावच्छेदकसमवायेन साध्याधिकरणे (घटे) तादृशहेतुतावच्छेदकपर्याप्तिसम्बन्धेन तादृशोभयत्वस्यावृत्तितया साध्यासामानाधिकरण्यादेव नातिव्याप्तिरित्याशयः । न चैतादृशसिद्धान्तः सर्वसम्मत इत्यत उक्तं तादृशसिद्धान्तादरे इति । एतादृशसिद्धान्ताङ्गीकारेऽतिव्याप्तिवारणार्थमेव हेतौ वृत्तिमत्त्वं साध्यसमानाधिकरणत्वं वा निविशतामिति केवलान्वयिग्रन्थे दीधितिकृतोक्तमिति दृष्टान्तयति-अतएवेत्यादिना ।

पूर्वोक्ताव्याप्त्यतिव्याप्तिदोषनिराकरिष्णूनां केषाञ्चिन्मतमाह—केचित्त्विति । निरुक्तेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यर्थः । यथोक्तसम्बन्धेनेत्यस्य पूर्वोक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वतदव-

माथुरी

विशेषसम्बन्धेन यथोक्तसम्बन्धेन वा निरवच्छिन्नाधिकरणता तदाश्रयव्यक्त्यवर्तमानं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसामान्यं तद्धर्मवत्त्वं विवक्षितम् ।

धूमवान् वह्नेरित्यादौ पर्वतादिनिष्ठवह्न्यधिकरणताव्यक्तेर्धूमाभावाधिकरणावृत्तित्वेऽप्ययोगोलकनिष्ठवह्न्यधिकरणताव्यक्तेरतथात्वान्नातिव्याप्तिरित्याहुः ।

चन्द्रिका

च्छेदकत्वान्यतरावच्छेदकसम्बन्धेनेत्यर्थः । तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्ना या स्वरूपसम्बन्धावच्छिन्ना तादृशसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धावच्छिन्ना वा निरूपकता तन्निरूपितनिरवच्छिन्नाधिकरणताश्रयनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वसामान्याभाववद्यद्धर्मावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धित्वसामान्यं तद्धर्मवत्त्वं व्याप्तिलक्षणं पर्यवसन्नम् । एवञ्च वह्निमान् धूमादित्यादौ साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ना या स्वरूपसम्बन्धावच्छिन्ना वह्न्यभावनिष्ठाधेयता तन्निरूपिता ह्रदादिनिष्ठनिरवच्छिन्नाधिकरणता तदाश्रयह्रदव्यक्त्यवर्तमानं यद्धेतुतावच्छेदक (संयोग) सम्बन्धावच्छिन्नयद्धर्मा (धूमत्वा) वच्छिन्नाधेयतानिरूपिताधिकरणत्वसामान्यं तद्धर्म(धूमत्व) वत्त्वं धूम इति लक्षणसमन्वयः । सत्तावान् द्रव्यत्वादित्यादौ तादृशसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्ननिरूपिता सामान्यादिनिष्ठा या निरवच्छिन्नाधिकरणता तदाश्रयसामान्यादिव्यक्त्यवर्तमानं समवायसम्बन्धावच्छिन्नद्रव्यत्वत्वाद्यवच्छिन्नाधेयतानिरूपिताधिकरणत्वसामान्यं, द्रव्यत्वत्वादिमत्त्वं द्रव्यत्वादाविति नाव्याप्तिः । इदं वन्हिमद् गगनादित्यत्रापि गगनत्वावच्छिन्नाधिकरणताया अप्रसिद्धतया यद्धर्मतत्वेन गगनत्वस्य धर्तुमशक्यत्वान्नातिव्याप्तिः । द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टसत्तात्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणताया द्रव्यनिष्ठायाः साध्याभावाधिकरणेऽवर्तमानत्वान्नाव्याप्तिः । उभयत्वाधिकरणताया अव्यासज्यवृत्तित्वे उभयत्वत्वावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतायाः पटादिनिष्ठायाः साध्याभावाधिकरणे पटे सत्त्वात् घटत्ववानुभयत्वादित्यत्र नातिव्याप्तिः । व्यासज्यवृत्तित्वपक्षे तु यद्धर्मावच्छिन्नाधिकरणतायाः साध्याधिकरणनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वेन विशेषणीयत्वे नातिव्याप्तिः । वह्निमान् धूमादित्यादावव्याप्तिवारणाय यद्धर्मावच्छिन्ननिरूपकतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशः । अन्यथा समवायेन धूमाधिकरणत्वसामान्यस्य वह्न्य-

माथुरी

अन्ये तु—हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्न-स्वाधिकरणताश्रयवृत्ति यन्निरवच्छिन्नाधिकरणत्वं तदवृत्तिनिरुक्तसा-ध्याभावत्वविशिष्टनिरूपितयथोक्तसम्बन्धावच्छिन्नाधिकरणतात्वकत्वमिति विशेषणविशेष्यभावव्यत्यासे तात्पर्यम्। स्वपदं हेतुपरम्। इत्थञ्च कपिसंयोगाभाववान् सत्त्वात् कपिसंयोगिभिन्नं गुणत्वादित्यादावपि नाव्याप्तिरित्याहुरिति संक्षेपः।

इति प्रथमलक्षणम्।

चन्द्रिका

भावाधिकरणताश्रये धूमावयवे सत्त्वेनाव्याप्तिः स्यादेव। सामान्य-पदव्यावृत्तिमाह-धूमवानिति। अतथात्वात् = धूमाधिकरणावृत्तित्वात्। नातिव्याप्तिरिति। एवञ्च सामान्यपदानुपादाने धूमाभावाधिकरणताश्रयेऽयोगोलके, संयोगेन वह्नित्वावच्छिन्नस्य यत् पर्वतादिनिष्ठं यत्किञ्चिदधिकरणत्वं तस्यासत्त्वाद् धूमवान् वह्नेरित्यत्रातिव्याप्तिः। तदुपादाने तु तप्तायःपिण्डनिष्ठाधिकरणत्वस्यापि वह्न्यधिकरणतासामान्यान्तर्गततया तस्य साध्याभावाधिकरणेऽयोगोलके सत्त्वेन नातिव्याप्तिरिति भावः।

नन्वेवं कपिसंयोगाभाववान् प्रमेयत्वादित्यादौ साध्याभावाधिकरणद्रव्यव्यक्त्यवर्त-मानत्वस्य प्रमेयत्वहेतावप्रसिद्ध्याऽव्याप्तिरित्यत आह-अन्ये त्विति। अत्र स्वपदम्, अधिकरणतात्वकत्वमित्यत्राधिकरणतात्वकपदञ्च विवक्षितहेतुपरम्। एवञ्च वह्निमान् धूमादित्यत्र हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नहेतुतावच्छेदका (धूमत्वा) वच्छिन्नस्वा (धूमा) धिकरणताश्रय (पर्वतादि) वृत्ति यन्निरवच्छिन्ना (इह पर्वते नितम्बे हुताशनो न शिखरे इत्यादिप्रतीत्या पर्वते वह्न्यभावस्य निरवच्छिन्ना-धिकरणत्वाऽसत्त्वेऽपि रूपरसादीनां तत्र निरवच्छिन्नाधिकरणत्वं) धिकरणत्वं तत्र निरुक्तसाध्या (वह्न्य) भावत्वविशिष्टनिरूपितनिरुक्तस्वरूपसम्बन्धावच्छिन्नाधिकरण-तात्वस्यावृत्त्या लक्षणसमन्वयः। कपिसंयोगाभाववान् प्रमेयत्वादित्यादावपि तादृश-प्रमेयत्वाधिकरणताश्रयगुणादिवृत्ति यन्निरवच्छिन्नाधिकरणत्वं तत्र साध्याभाव-(कपिसंयोगाभावाभावस्य = कपिसंयोगरूप) स्यावर्तमानत्वान्न पूर्वोक्ताव्याप्तिरिति भावः। विशेषणविशेष्यभावेत्यादि। केचित्त्विति कल्पे यद्धर्मावच्छिन्नाधिकरण-त्वसामान्यं विशेष्यमत्र साध्याभावत्वविशिष्टनिरूपिताधिकरणतात्वकत्वमिति व्यत्यासः। तेन कपिसंयोगाभाववान् सत्त्वात्, कपिसंयोगिभिन्नं गुणत्वादित्यादौ सत्त्वाधिकरणे गुणादौ साध्याभावस्य = कपिसंयोगस्यावर्तमानतया नाव्याप्तिः। अन्यथा पूर्वोक्तरीत्या साध्याभावा (कपिसंयोगा) धिकरणद्रव्यव्यक्त्यवर्तमानत्वस्य हेतौ (सत्तायाम्) अभावेनाव्याप्तिर्ध्रौव्यादिति शम्।

इति प्रथमलक्षणम्।

लक्षणान्तरमाह—

मू० साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम् ।

माथुरी

साध्यवद्भिन्नो यः साध्याभाववान् तदवृत्तित्वमित्यर्थः । कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकाव्याप्तिवारणाय साध्यवद्भिन्नेति साध्याभाववतो विशेषणमिति प्राञ्चः । तदसत् । 'साध्याभाववत्' इत्यस्य व्यर्थतापत्तेः । साध्यवद्भिन्नावृत्तित्वमित्यस्यैव सम्यक्त्वात् ।

चन्द्रिका

अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिवारणार्थं कर्मधारयसमासघटितलक्षणमाह—साध्यवद्भिन्नेति । साध्यवद्भेदाधिकरणाभिन्नो यः साध्याभावाधिकरणताश्रयस्तन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वमव्यभिचरितत्वमित्यर्थः । एवञ्च वह्निमान् धूमादित्यादिसद्धेतौ साध्यवान् पर्वतादिः तद्भिन्नो ( स्वभेदस्य स्वस्मिन्नसत्त्वेन ) जलह्रदादिः स एव साध्या ( वह्न्य ) भाववान् तदवृत्तित्वम् = तस्मिन्नवृत्तित्वं धूमादिहेतोरिति लक्षणसमन्वयः । धूमवान्वह्नेरित्यत्र साध्यवान्पर्वतादिस्तद्भिन्नोऽयोगोलकः स च साध्याभाववान् = धूमाभाववान् तत्र वह्नेरवृत्तित्वाभावेनातिव्याप्त्यभावः । साध्यवद्भिन्नेत्यस्य व्यावृत्तिपूर्वकमन्वयं योजयितुमाह—कपिसंयोगीति । व्याप्यवृत्तिसाध्यके वह्निमान्धूमादित्यादावव्याप्त्यभावेनाह— अव्याप्यवृत्तीति । अव्याप्यवृत्तित्वञ्च = स्वाभावसामानाधिकरण्यम् । भवति च—एकस्मिन् वृक्षे शाखावच्छेदेन कपिसंयोगस्य मूलावच्छेदेन च तदभावस्य सत्वात् कपिसंयोगे स्वाभावसामानाधिकरण्यम् । एवञ्च साध्यवद्भिन्नपदानुपादाने कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभाववति मूलावच्छेदेन वृक्षे हेतोः सत्त्वेनाव्याप्तिः । तदुपादाने तु साध्यवान् वृक्षो न तु साध्यवद्भिन्नः ( भेदस्य व्याप्यवृत्तित्वात् ) किन्तु गुणादिकमेव तथा तत्र साध्याभावाधिकरणे गुणादौ हेतोः = एतद्वृक्षत्वस्यावृत्त्याऽव्याप्त्यभावात् । इदञ्चाधिकरणभेदेनाभावभेदमादाय, अन्यथा गुणवृत्तिकपिसंयोगाद्यभावस्य मूलावच्छेदेन वृक्षेऽपि सत्त्वेनाव्याप्त्यनुद्धारात् ।

व्यर्थतापत्तेरिति । वैयर्थ्यं नाम—स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकलघुभूतधर्मान्तरघटितत्वम् । वह्निमान् नीलधूमादित्यत्र नीलधूमत्वं व्यर्थविशेषणघटितत्वेन व्यर्थम् । यथा—स्वपदग्राह्यनीलधूमत्वसमानाधिकरणप्रकृतसाध्य-(वह्न्यादि) व्याप्यतावच्छेदकलघुभूतधर्मान्तर (धूमत्व) घटितत्वम् । तथा प्रकृतेऽपि

माथुरी

नव्यास्तु—साध्यवद्भिन्ने साध्याभावः साध्यवद्भिन्नसाध्याभावस्तद्वदवृत्तित्वमिति सप्तमीतत्पुरुषोत्तरं मतुप्प्रत्ययः। तथा च साध्यवद्भिन्नवृत्तिर्यः साध्याभावः तद्वदवृत्तित्वमित्यर्थः। एवञ्च साध्यवद्भिन्नवृत्तीत्यनुक्तौ संयोगी द्रव्यत्वादित्यादावव्याप्तिः। संयोगाभाववति द्रव्ये द्रव्यत्वस्य वृत्तेः। तदुपादाने च संयोगवद्भिन्नवृत्तिः संयोगाभावो गुणादिवृत्तिः संयोगाभाव एव, अधिकरणभेदेनाभावभेदात्, तद्वदवृत्तित्वान्नाऽव्याप्तिः।

चन्द्रिका

साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमित्यस्य, साध्यवद्भिन्नावृत्तित्वमित्यस्य चाभिन्नतया—लघुभूतधर्मान्तरघटितत्वेन—साध्यवद्भिन्नसाध्याभाववदवृत्तित्वलक्षणघटकीभूतसाध्याभाववत्पदस्य वैयर्थ्यं बोध्यम्।

दीधितिकृन्मतमाविष्कर्तुमाह—नव्यास्त्विति। साध्यवद्भिन्ने इत्यस्य साध्यवद्भिन्नाधिकरणवृत्तित्वमर्थः। सप्तमीतत्पुरुषोत्तरम्=साध्यवद्भिन्ने साध्याभाव इत्याकारकसप्तमीतत्पुरुषसमासोत्तरम्। मतुप्प्रत्यय इति। न चात्र साध्यवद्भिन्ने यः साध्याभाव इति सप्तमीतत्पुरुषस्यापि कर्मधारयसमासत्वेनोक्ततया तदुत्तरं (न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः) इत्यनुशासनविरोधात् मतुप्प्रत्ययस्यैवासम्भव इति वाच्यम्, साध्यरूपाभावो यस्यासौ साध्याभावः सोऽस्यास्तीति साध्याभाववान् साध्यवद्भिन्ने साध्याभाववान् साध्यवद्भिन्नसाध्याभाववानिति विग्रहादरे बहुव्रीह्युत्तरं मतुप्प्रत्यये बाधकाभावात्। सम्पन्नो व्रीहिरित्यत्रानेकव्रीहितात्पर्यकेऽप्येकवचनदर्शनेन पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तेः संकोचस्य व्युत्पत्तिवादादौ दृष्टतयाऽत्रापि साध्यवद्भिन्ने यः साध्याभाव इति साध्याभाववत्पदार्थैकदेशे साध्याभावे साध्यवद्भिन्नपदार्थस्यान्वये क्षत्यभाव इति भावः। लक्षणार्थमाह—तथा चेति। अव्याप्तिरिति। तथा च साध्यवद्भिन्नवृत्तित्वस्य साध्याभावविशेषणत्वानुपादाने संयोगी द्रव्यत्वादित्यादौ संयोगस्याव्याप्यवृत्तित्वेन तदभावस्य स्वाधिकरणैकदेशावच्छेदेन द्रव्ये वर्तमानतया भवत्यव्याप्तिः। तादृशसंयोगाभावस्य द्रव्यावृत्तित्वे हेतुमाह-अधिकरणेति। द्रव्यगुणाद्यधिकरणभेदेनेत्यर्थः। अभावभेदात्=अत्यन्ताभावस्य भिन्नत्वात्। एवञ्च द्रव्यगुणादिनिष्ठसंयोगाभावानां परस्परं भिन्नतया संयोगरूपसाध्यवद् (द्रव्य) भिन्नगुणवृत्तिसंयोगाभावस्याधिकरणताया गुण एव सत्त्वेन तत्र हेतोः (द्रव्यत्वस्य) अवृत्तित्वेन नाव्याप्तिरुक्तस्थले साध्यवद्भिन्नेत्युपादाने इति भावः।

### माथुरी

न च तथापि साध्यवद्भिन्नावृत्तित्वमित्येवास्तु लक्षणं किं साध्याभाववदित्यनेनेति वाच्यम्। यथोक्तलक्षणे तस्याप्रवेशेन वैयर्थ्याभावात्। तस्यापि लक्षणान्तरत्वात्। न च तथापि साध्यवद्भिन्नवृत्तिर्यस्तद्वद्वृत्तित्वमेवास्तु किं साध्याभावपदेनेति वाच्यम्, तादृशद्रव्यत्वादिमद्वृत्तित्वादसम्भवापत्तेः। साध्याभावेत्यत्र साध्यपदमप्यत एव, द्रव्यत्वादेरपि द्रव्य-

### चन्द्रिका

तथापीति। नव्यमतलक्षणस्वीकारेऽपीत्यर्थः। यथोक्तलक्षणे = साध्यवद्भिन्नवृत्तिसाध्याभाववदवृत्तित्वलक्षणे। तस्य = साध्यवद्भिन्नावृत्तित्वस्य। अप्रवेशेन = घटकत्वाभावेन। वैयर्थ्याभावात् = वैयर्थ्यलक्षणालक्ष्यत्वात्। तथा च नव्याभिप्रेतलक्षणापेक्षया साध्यवद्भिन्नावृत्तित्वमित्यस्य लक्षणान्तरत्वेन न लक्षणान्तरे लक्षणान्तरस्य वैयर्थ्यं सम्भवतीति भावः। तथा सति एकेनैव लघुलक्षणेनेष्टसिद्धौ सर्वत्र लक्षणान्तरप्रणयनस्य वैयर्थ्यप्रसंगापातात्। तथापीति। लक्षणान्तरेण वैयर्थ्याभावेऽपीत्यर्थः। किं साध्याभावपदेनेति। एतल्लक्षणघटकीभूतसाध्याभावपदस्य वैयर्थ्यं स्यादेवेति शंकितुराशयः। तादृशद्रव्यत्वादिमद्वृत्तित्वादिति। साध्यवद्भिन्नजलह्रदादिवृत्तिद्रव्यत्वादिमत्पर्वतादिवृत्तित्वात् धूमादिरूपसद्धेतोरित्यर्थः। असम्भवापत्तेरिति। तथा च साध्याभावपदानुपादाने साध्यव(वह्निम)त्पर्वतादिभिन्नजलह्रदादिवृत्तिद्रव्यत्वादिमत्पर्वतादिवृत्तित्वं धूमादिहेतोरिति सद्धेतुमात्रेऽसम्भवापत्तिः स्यात्। अत्र साध्यवद्भिन्नवृत्तिर्यस्तस्य साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन वृत्तित्वविवक्षणे तादृशस्वरूपसम्बन्धेन द्रव्यत्वस्याधिकरणाप्रसिद्ध्या भावसाध्यकस्थले दोषाभावादाह—द्रव्यत्वादीति। आदिपदेन प्रमेयत्ववाच्यत्वादिपरिग्रहः, तस्य तादृशस्वरूपसम्बन्धेन पदार्थमात्रे वृत्तितयाऽसम्भवः स्यादेवेति भावः। ननु साध्यवद्भिन्नवृत्तिर्योऽभावस्तद्वदवृत्तित्वमित्येवास्तु लक्षणं तावतापि द्रव्यत्वादिभावपदार्थमादाय वह्निमान् धूमादित्यादौ दोषाभावात्साध्याभावघटकीभूतसाध्यपदं व्यर्थमित्यत आह—साध्येति। अत एवेति। असम्भववारणादेवेत्यर्थः। तथा च साध्यपदानुक्तौ साध्यवद्भिन्नजलादिवृत्त्यभावस्य द्रव्यत्वाभावाभावस्य = द्रव्यत्वरूपस्याधिकरणे पर्वतादौ धूमादिहेतोः सत्त्वेनासम्भवस्तदवस्थः, तदुक्तौ तु अभावरूपद्रव्यत्वादेः साध्याभावरूपत्वाभावेन नोक्ताऽसम्भवः। ननु

माथुरी

त्वाभावाभावत्वात् भावरूपाभावस्य चाधिकरणभेदेन भेदाभावात्। ननु तथापि घटाकाशसंयोग–घटत्वान्यतराभाववान् गगनत्वादित्यादौ घटानधिकरणदेशावच्छेदेन घटाकाशसंयोगाभावस्य गगने सत्त्वात् सद्धेतुतयाऽव्याप्तिः, साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य घटाकाशसंयोगरूपस्य गगनेऽपि सत्त्वात् तत्र च हेतोर्वृत्तेः। न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववत्त्वं विवक्षितमिति वाच्यम्।

साध्याभावपदवैयर्थ्यापत्तेः। साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्ति-

चन्द्रिका

अधिकरणभेदेनाभावस्य भिन्नतया जलह्रदादिनिष्ठद्रव्यत्वरूपाभावस्य न पर्वतादिवृत्तित्वमिति साध्यपदानुपादानेऽपि न क्षतिरित्यत आह— भावरूपेति। तथा च शुद्धाभावस्याधिकरणभेदेन भिन्नत्वेऽपि भावरूपाभावस्याधिकरणभेदेन भेदाभावात् न साध्यपदं व्यर्थं न वा पूर्वापरग्रन्थविरोधः। ननु तथापीति। अधिकरणभेदेऽपि भावरूपाभावस्यैक्यमभ्युपगम्य साध्यपदस्य सार्थक्येऽपीत्यर्थः। अत्र घटाकाशसंयोगेति पदमव्याप्तिसम्पादनाय, घटत्वेति पदञ्च केवलान्वयि-घटाकाशसंयोगाभावमात्रसाध्यकाव्याप्तेरनुद्धारादिति बोध्यम्। ननु तथापि तादृशान्यतराभावसाध्यकगगनत्वादिहेतोर्व्यभिचारित्वमस्त्येव, साध्याभावान्तःपातिघटाकाशसंयोगस्य गगने सत्त्वेन तत्र गगनत्वहेतोः सत्त्वादत आह— घटेति। घटाधिकरणभिन्नदेशावच्छेदेनेत्यर्थः। सद्धेतुतयेति। तथा च घटानधिकरणदेशावच्छेदेन घटत्वस्य घटाकाशसंयोगस्य चान्यतरात्मकस्य गगनादावभावसत्त्वेन तत्साध्यकगगनत्वहेतोः सद्धेतुत्वे बाधकाभावात्। अव्याप्तिं सम्पादयति— साध्यवद्भिन्न इति। साध्यवद्भिन्ने = घटाकाशसंयोगघटत्वान्यतराभाववद्गगनादिभिन्ने (घटे), अन्यतरात्मकस्य घटत्वस्य घटे सत्त्वेन तदभावस्य = अन्यतराभावात्मकस्य साध्यस्य (घटत्वाभावस्य) गगनादावेव सत्त्वेन तादृशसाध्यवद्गगनादिभिन्नत्वस्य घटे सत्त्वमेवेति भावः। तत्र घटे वर्तमानस्य साध्याभावस्य घटाकाशसंयोगघटत्वान्यतराभावाभावस्य घटाकाशसंयोगरूपस्य गगनेऽपि सत्त्वेन तत्र गगनत्वहेतोः सत्त्वेनाव्याप्तिः। न च साध्येति। तथा च साध्यवद्भिन्न (घट) वृत्तित्वविशिष्टसाध्याभावस्या (घटाकाशसंयोग-घटत्वान्यतराभावाभावस्य = घटाकाशसंयोगरूपस्या) पि घट एव वृत्तित्वन्न तु गगने विशिष्टाधिकरणताया विलक्षणत्वादिति नाव्याप्तिः।

समाधत्ते—साध्याभावेति। साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वापेक्षया लघुतर-साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव

माथुरी

त्वस्यैव सम्यक्त्वादिति चेन्न, अभावाभावस्यातिरिक्तत्वमतेनैतल्लक्षणकरणात्। तथा चाधिकरणभेदेनाभावभेदात्साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य प्रतियोगिव्यधिकरणस्य प्रतियोगिमति गगनेऽसत्त्वादव्याप्तेरभावात्।

न चैवं साध्याभावेत्यत्र साध्यपदवैयर्थ्यम्, अभावाभावस्यातिरिक्तत्वेन द्रव्यत्वादेरभावत्वाभावात् साध्यवद्भिन्नवृत्तिघटाभावादेस्तु हेतुमत्यसत्त्वादधिकरणभेदेनाभावभेदादिति वाच्यम्, यत्र प्रतियोगि-

चन्द्रिका

-लक्षणत्वसम्भवे सकलेष्टसिद्धौ साध्याभावपदस्य वैयर्थ्यापत्तेः = निष्प्रयोजनकत्वापत्तेरित्यर्थः। सम्यक्त्वादिति। विशिष्टाधिकरणताया विलक्षणतया वह्निमद्भिन्नजलह्रदादिवृत्तित्वविशिष्टद्रव्यत्वाधिकरणत्वं जलह्रदादावेव न तु पर्वतादाविति तत्र धूमादेरवर्तमानत्वेन वह्निमान् धूमादित्यादौ सर्वत्र पूर्वोक्तासम्भवासम्भवे साध्याभावपदमकिञ्चित्करमेवेति भावः। अभावाभावस्येति। तथा चाभावाभावस्यातिरिक्तत्वमतेन = सप्तमपदार्थस्वरूपत्वमतेन नोक्ताव्याप्तिरित्यर्थः। कथं नाव्याप्तिरित्यत आह—तथा चेति। प्रतियोगिव्यधिकरणस्येति। कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिवारणायाग्रे विवक्षणीयस्य प्रतियोगिव्यधिकरणसाध्याभावस्य गगनेऽसत्त्वम्। तथा हि—साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य = तादृशाऽन्यतराभावाभावस्य घट एव प्रतियोगिव्यधिकरणत्वन्न तु गगने तत्र घटानधिकरणदेशावच्छेदेन तादृशान्यतराभावाभावरूपसाध्याभावप्रतियोगिनः = घटाकाशसंयोगाभावस्य विद्यमानतया प्रतियोगिसामानाधिकरण्यात्। तथा च विरुद्धधर्माध्यासेन घटत्व—घटाकाशसंयोगान्यतराभावाभावस्याधिकरणभेदेन भेदस्य स्वीकार्यतया साध्यवद्भिन्ने घटे वर्तमानस्य प्रतियोगिव्यधिकरणसाध्याभावस्य = तादृशान्यतराभावाभावस्याधिकरणं घट एव तत्र गगनत्वहेतोरसत्त्वेन नाव्याप्तिरिति भावः। अथैवमधिकरणभेदेनाभावभेदाभ्युपगमे वह्निमान्धूमादित्यादौ साध्यवद्भिन्ने जलह्रदादौ वर्तमानस्याभावस्याधिकरणं जलह्रदादिकमेव न तु हेतुमत्पर्वतादिकम्, एवमभावाभावस्यातिरिक्तत्वेन द्रव्यत्वाभावाभावस्यापि द्रव्यत्वस्वरूपता न सम्भवतीति साध्यवद्भिन्नजलादिवृत्त्यभावपदेन तस्य धर्तुमशक्यत्वात्, घटाभावादिरेव तादृशाभावस्तदधिकरणे जलादौ हेतोर्धूमादेरवर्तमानतया पूर्वोक्ताऽसम्भवासम्भवे साध्यपदं व्यर्थमेवेति शङ्कते—न चैवमिति। यत्रेति। कपिसंयोगी एतद्वृक्षत्वा-

माथुरी

समानाधिकरणत्व-प्रतियोगिव्यधिकरणत्वलक्षणविरुद्धधर्माध्यासस्तत्रैवाधिकरणभेदेनाभावभेदाभ्युपगमो न तु सर्वत्र, तथा च साध्यवद्भिन्नवृत्तिघटाभावादेर्हेतुमत्यपि सत्त्वादसम्भववारणाय साध्यपदोपादानात् ।

यद्वा—घटाकाशसंयोग-घटत्वान्यतराभावाभावोऽतिरिक्त एव, घटाकाशसंयोगादीनामननुगततया तथात्वस्य वक्तुमशक्यत्वात् । घटत्वद्रव्यत्वाद्यभावाभावस्तु नातिरिक्तो घटत्वद्रव्यत्वादीनामप्यनुगतत्वात् । तथा च द्रव्यत्वादिकमादायासम्भववारणायैव साध्यपदमिति प्राहुरित्यास्तां विस्तरः ।

इति द्वितीयलक्षणम् ।

---

चन्द्रिका

दित्यादौ शाखाग्रवच्छेदेन प्रतियोगिसमानाधिकरणः मूलावच्छेदेन प्रतियोगिव्यधिकरणश्च वृक्षे कपिसंयोगाभावो भवति, एवं घटत्व-घटाकाशसंयोगान्यतराभावाभावोऽपि घटे प्रतियोगिव्यधिकरणो गगने घटानधिकरणदेशावच्छेदेन प्रतियोगिसमानाधिकरणश्च भवति तत्रैवाधिकरणभेदेनाभावभेदः स्वीक्रियते न तु सर्वत्र घटाभावादेस्तत्प्रतियोगिनो घटस्याधिकरणवृत्तित्वे प्रमाणाभावेन तद्भेदेनाभावस्यापि भेदाभावात् । तथा चेति । सर्वत्राभावेऽधिकरणभेदेन भेदानङ्गीकारे चेत्यर्थः । साध्येति । साध्यवद्भिन्नजलह्रदादिवृत्तिघटाभावादेर्हेतुमति पर्वतादौ सत्त्वेन तत्र हेतोर्धूमादेरपि वर्तमानतयाऽसम्भवः स्यादतः साध्यपदोपादानमिति भावः ।

ननु घटाकाशसंयोग-घटत्वान्यतराभावाभावस्य घटाकाशसंयोगस्यापि स्वरूपतया—प्रतियोगिस्वरूपत्वे च तस्य प्रतिव्यक्तिभिन्नत्वेनाननुगतत्वान्न प्रतियोगिस्वरूपत्वं तस्य किन्त्वतिरिक्तस्वरूपत्वमेव, न तु सर्वोऽभावस्तथा तस्य घटत्वादिरूपेणानुगतत्वात्तथा च प्रकृते तथाविधद्रव्यत्वमादायासम्भववारणाय साध्यपदस्य सार्थक्यसम्भव इत्याशयवानाह—यद्वेति । तथात्वस्य = अनुगतत्वस्य ।

इति द्वितीयलक्षणम् ।

---

**मू०—साध्यवत्प्रतियोगिकाऽन्योन्याभावासामानाधिकरण्यम् ।**

माथुरी

हेतौ साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणवृत्तित्वाभाव इत्यर्थः। अन्योन्याभावश्च प्रतियोग्यवृत्तित्वेन विशेषणीयस्तेन साध्यवतो व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तावपि नासम्भवः। नन्वेवमपि नानाधिकरणकसाध्यके वह्निमान्धूमादित्यादौ साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तेर-

चन्द्रिका

अधिकरणभेदेनाभावभेदे मानाभावात्साध्यवद्भिन्नगुणादिवृत्त्यभावस्य हेतुमति सत्त्वेन संयोगी द्रव्यत्वादित्यादौ द्वितीयलक्षणानुसरणेऽप्यव्याप्तिवारणासम्भवे तद्वारणाय तृतीयलक्षणमाह—साध्यवदिति। साध्यवान्प्रतियोगी यस्यान्योन्याभावस्य स साध्यवत्प्रतियोगिकान्योन्याभावस्तदसामानाधिकरण्यं=तदधिकरणवृत्तित्वाभाव इत्यभिप्रायेणाह—हेताविति। एवञ्च वह्निमान्नेत्याकारकसाध्यव (वह्निम) त्प्रतियोगिकान्योन्याभावाधिकरणे जलादौ धूमादिहेतोरवृत्तित्वेन वह्निमान्धूमादित्यादौ लक्षणसमन्वयः। संयोगी द्रव्यत्वादित्यत्रापि संयोगवत्प्रतियोगिकान्योन्याभावाधिकरणे गुणादौ द्रव्यत्वहेतोरवर्तमानत्वेन न पूर्वोक्ताव्याप्तिः। धूमवत्प्रतियोगिकान्योन्याभावाधिकरणे तप्तायःपिण्डे वह्नेः सत्त्वेन धूमवान्वह्नेरित्यादावतिव्याप्तिरपि नेति बोध्यम्। ननु वह्निमद्घटोभयं नेत्याकारकसाध्यवत्प्रतियोगिकान्योन्याभावस्य (एकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्या) साध्यवति पर्वतादौ सत्त्वेन तत्र हेतोरपि वृत्तितया वह्निमान् धूमादित्यादावसम्भवः स्यादत आह—अन्योन्याभावश्चेति। प्रतियोग्यवृत्तित्वं=व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वम्, व्यासज्यवृत्तित्वञ्च=द्वित्वाद्यवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम्। तथा च वह्निमद्घटोभयन्नेत्याकारकाभावस्य व्यासज्यवृत्त्युभयत्वधर्मावच्छिन्नप्रतियोगिताकत्वेन केवलान्वयितया प्रतियोगिवृत्तित्वान्नोक्तोभयाभावमादाय पूर्वोक्तदोषप्रसंगः। नन्वेवमपीति। व्यासज्यवृत्तिधर्मानवच्छिन्नसाध्यवत्प्रतियोगिकान्योन्याभावस्य निवेशेऽपीत्यर्थः। नानेति। नानात्वम्=स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टत्वम्। तथा च स्वपदग्राह्यतादृशभेदविशिष्टाधिकरणताश्रयभूतं यस्य साध्यतावच्छेदकावच्छिन्नस्य, तथाभूतनानाधिकरणकवह्निसाध्यकधूमादावित्यर्थः। तत्तद्व्यक्तित्वावच्छिन्नेति। तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्य व्यासज्य-

माथुरी

व्याप्तिर्दुर्वारेति प्रतियोग्यवृत्तित्वमपहाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावविवक्षणे तु पञ्चमेन सह पौनरुक्त्यमिति चेन्न, वक्ष्यमाणकेवलान्वय्यव्याप्तिवदस्याप्यत्र दोषत्वात्। न च तथापि साध्यवत्प्रतियोगिकान्योन्याभावमात्रस्यैवैतल्लक्षणघटकत्वे वक्ष्यमाणकेवलान्वय्यव्याप्तिरत्राऽसङ्गता, केवलान्वयिसाध्यकेऽपि साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य प्रसिद्धत्वादिति वाच्यम्। तत्रापि तादृशान्योन्याभावस्य प्रसिद्धत्वेऽपि तद्वति हेतोर्वृत्तेरेवाऽव्याप्तेर्दुर्वारत्वात्। यद्वा साध्यवत्प्रतियोगिताकान्योन्या-

चन्द्रिका

वृत्तिधर्मानवच्छिन्नप्रतियोगिताकतया तादृशाभावमादाय वह्निमान् धूमादित्यादौ साध्यवत्तत्तत्पर्वतादिव्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्या ( पर्वतादिभेदस्य ) परसाध्यवति ( महानसादौ ) सत्त्वेन तत्र हेतोः ( धूमादेः ) अपि वृत्तित्वादव्याप्तिरिति भावः। प्रतियोग्येति। अन्योन्याभावविशेषणं व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वरूपप्रतियोग्यवृत्तित्वं परित्यज्येत्यर्थः। साध्यवत्त्वावच्छिन्नेति। न्यूनेतरवारकधर्मावच्छिन्नप्रतियोगितानिरूपकान्योन्याभावस्य विवक्षणे त्वित्यर्थः। पञ्चमेन सह पौनरुक्त्यमिति। साध्यवदन्यावृत्तित्वघटकसाध्यवदन्यत्वस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदरूपत्वं, साध्यवत्प्रतियोगिताकान्योन्याभावस्य च यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदस्वरूपत्वं स्यात्तदा तृतीयपञ्चमलक्षणयोरैक्येन पौनरुक्त्यं स्फुटं स्यात्। ननु केवलान्वयिस्थले साध्याभावसाध्यवत्प्रतियोगिताकान्योन्याभावयोरप्रसिद्धयाऽव्याप्तिर्मूलकृताभिहिता, सा चात्र साध्या ( प्रमेया ) धिकरणीभूततत्तत्पर्वतादिव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्य प्रसिद्धयाऽसङ्गतेति मनसि निधायाह—न च तथापीति। समादधति—तत्रापीति। प्रमेयसाध्यकवाच्यत्वादौ केवलान्वयिन्यपीत्यर्थः। तादृशान्योन्याभावस्य—प्रमेयादिवद्घटादिव्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य। तद्वति = तादृशान्योन्याभाववति। हेतोः = वाच्यत्वादेर्वृत्तित्वादेवाव्याप्तेर्दुर्वारत्वात्—प्रकृते केवलान्वयिन्यव्याप्तिर्विवक्षिता तस्याः साध्याभावाऽप्रसिद्धिं विनापि सत्त्वसम्भवादिति भावः। ननु नानाधिकरणसाध्यकेऽप्यव्याप्तिसम्भवे केवलान्वयिमात्रेऽव्याप्तिकथनमनुचितमित्यत आह—यद्वेति।

माथुरी

भावपदेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाव एव विवक्षितः। न चैवं पञ्चमाभेदः, तत्र साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वेन प्रवेशः, अत्र तु तादृशान्योन्याभावाधिकरणत्वेन, इत्यधिकरणत्वप्रवेशाप्रवेशाभ्यामेव भेदात्। अखण्डाभावघटकतया च नाधिकरणत्वांशस्य वैयर्थ्यमिति न कोऽपि दोष इति दिक्।

इति तृतीयलक्षणम्।

---

चन्द्रिका

साध्यवत्त्वेति। प्रकृतलक्षणघटकतादृशान्योन्याभावपदेन साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नावच्छेदकतानिरूपितप्रतियोगिताकान्योन्याभाव एव, विवक्षितः—ग्रन्थकृदभिप्रेतः, अत्रैवकारेण प्रतियोग्यवृत्तित्वादिविशेषणानामन्योन्याभावे व्यावृत्तिः। तथा च तत्तद्व्यक्तित्वाद्यवच्छिन्नप्रतियोगितायां साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नावच्छेदकतानिरूपितत्वाभावेन न नानाधिकरणसाध्यकेऽव्याप्तिर्न वाऽसम्भव इति नोक्तानौचित्यमित्याशयः। अथैवं पञ्चमलक्षणस्याप्येतादृशार्थतया तेन पौनरुक्त्यमिति शंकते—न चैवमिति। तत्र = पञ्चमलक्षणे। अत्र = तृतीयलक्षणे। तथा च साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावाधिकरणवृत्तित्वाभाव इति तृतीयलक्षणम्। साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववदवृत्तित्वमिति पञ्चमलक्षणमिति भेदः। अखण्डाभावेत्यस्यातिरिक्ताभावेत्यर्थः। एवञ्चाधिकरणत्वघटिताघटितत्वाभ्यामेव मिथो भिन्नतया एकसमनियतलघुधर्मान्तराघटितत्वेन न वैयर्थ्यमिति भावः।

इति तृतीयलक्षणम्।

---

मू० सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् ।

माथुरी

साकल्यं साध्याभाववतो विशेषणम् । तथा च यावन्ति साध्याभावाधिकरणानि तन्निष्ठाभावप्रतियोगित्वं हेतोर्व्याप्तिरित्यर्थः । धूमाद्यभाववज्जलह्रदादिनिष्ठाभावप्रतियोगित्वाद्वह्न्यादावतिव्याप्तिरिति यावदिति साध्याभाववतो विशेषणम् । साध्याभावविशेषणत्वे तत्तद्ह्रदावृत्तित्वादिरूपेण यो वह्न्याद्यभावस्तस्यापि सकलसाध्याभावत्वेन प्रवेशात् तावदधिकरणाऽप्रसिद्ध्याऽसम्भवापत्तेः । न च द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभाववति गुणादौ सत्त्वादेर्विशिष्टाभावादिसत्त्वादतिव्याप्तिरिति वाच्यम् ।

चन्द्रिका

व्यतिरेकव्याप्तेरप्यव्यभिचरितत्वपदप्रतिपाद्यत्वमुपपादयितुं चतुर्थलक्षणमुपक्रमते--सकलेति । सकलसाध्याभाववति ( जलह्रदादौ ) वृत्तिर्धूमाभावस्तत्प्रतियोगित्वं धूमे वर्तत इति लक्षणसमन्वयः । तथा चेति । साध्याभाववति साकल्यविशेषणे दत्ते चेत्यर्थः । सकलेत्यस्य यावदित्यर्थः । तस्य च साध्याभाववत्यन्वये धूमाभाववज्जलह्रदादिनिष्ठाभावप्रतियोगित्वस्य वह्नौ सत्त्वेऽपि धूमवान् वह्नेरित्यादिव्यभिचारिणि नातिव्याप्तिरित्याशयेनाह—धूमाद्यभाववदिति । ननु यावत्त्वस्य प्रथमोपस्थितसाध्याभावविशेषणत्वेऽपि सकलसाध्या ( धूमाद्य ) भावस्याधिकरणमयोगोलकमपीति तन्निष्ठाभावप्रतियोगित्वं वह्नौ नास्तीत्यतिव्याप्त्यभावाद्व्यर्थं साध्याभाववतो विशेषणमित्यत आह—साध्याभावविशेषणत्व इति । तत्तद्ह्रदावृत्तित्वेति । अयमाशयः--वह्नेरपि तत्तद्ह्रदावृत्तित्वेन वह्न्यभावोऽपि तत्तद्ह्रदावृत्तिर्नास्तीत्याकारकः, स च लाघवात्तत्तद्ह्रदत्वस्वरूपः, एवमादिपदग्राह्य-घटावृत्तिर्नास्ति, भूतलावृत्तिर्नास्ति-इत्याद्याकारकाभावा अपि घटत्व-भूतलत्वादिस्वरूपाः, तथा च सकलसाध्याभावानां तत्तद्ह्रदत्वघटत्वभूतलत्वादिस्वरूपाणामेकाधिकरणाऽप्रसिद्ध्याऽसम्भवः स्यादेवेति । एवं साध्यमात्रविशेषणेऽपि साकल्ये सकलधूमप्रतियोगिकाभावस्य यत्किञ्चिदधिकरणे जलादौ वर्तमानस्य वह्न्यभावस्य प्रतियोगितायां वह्नौ सत्त्वेन धूमवान्वह्नेरित्यादावतिव्याप्तिरिति साध्यं साध्याभावञ्चोपेक्ष्य साध्याभाववत्येव विशेषणं साकल्यमिति निष्कर्षः । नन्विदं लक्षणं द्रव्यं सत्त्वादित्यादावतिव्याप्तिपराहतम् , तथा हि-द्रव्यत्वाभाववद्यावद्गुणादौ (विशिष्टः शुद्धान्नातिरिच्यत इति न्यायेन ) गुणकर्मान्यत्वविशिष्टसत्ताभावस्य, ( विशिष्टशुद्धयोरैक्यानङ्गीकर्तृमतेऽपि ) सत्त्वघटोभयाभावस्य च सत्त्वेन तदीयप्रतियोगितायाः सत्तायां सत्त्वादतिव्याप्तिरित्याशयेन शङ्कते-न चेति ।

### माथुरी

तादृशाभावप्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वस्येह विवक्षितत्वात्। प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, तेन द्रव्यत्वाभाववति गुणादौ सत्तादेः संयोगादिसम्बन्धावच्छिन्नाभावसत्त्वेऽपि नातिव्याप्तिः। साध्याभावश्च साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। अन्यथा पर्वतादावपि वह्न्यादेर्विशिष्टाभावादिसत्त्वेन, समवायादिसम्बन्धावच्छिन्नवह्न्यादिसामान्याभावसत्त्वेन च यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावाद्

### चन्द्रिका

उत्तरयति—तादृशाभावेति। सकलसाध्याभाववन्निष्ठाभावेत्यर्थः। प्रतियोगितेति। प्रतियोगितावच्छेदकहेतुतावच्छेदकेत्यस्य = प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणहेतुतावच्छेदकतापर्याप्त्यधिकरणत्वे, तादृशहेतुतावच्छेदकावच्छिन्नत्वे सति हेतुतावच्छेदकेतरानवच्छिन्नत्वे वा तात्पर्यम्। एवञ्च द्रव्यत्वाभावाधिकरणगुणादिनिष्ठगुणकर्मान्यत्वविशिष्टसत्ताऽभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्य विशिष्टसत्तात्व एव निष्ठतया हेतुतावच्छेदकीभूतसत्तात्वेऽसत्त्वान्नातिव्याप्तिः। इतरवारकविशेषणेनोभयाभावमादायापि नाव्याप्त्यतिव्याप्ती इति भावः। प्रतियोगिता चेति। वह्न्यभावाधिकरणे धूमावयवे समवायेन धूमस्य सत्त्वेऽपि न वह्निमान् धूमादित्यादावव्याप्तिः, न वा धूमवान् वह्नेरित्यादौ धूमाभावाधिकरणे अयोगोलके स्वरूपसम्बन्धेन वह्न्यभावसत्त्वेप्यतिव्याप्तिरपि हेतुतावच्छेदकसम्बन्धावच्छिन्नायाः प्रतियोगिताया विवक्षणेनेति बोध्यम्। एवं द्रव्यत्वाभावाधिकरणे यावति गुणादौ संयोगादिसम्बन्धेन सत्ताभावसत्त्वेऽपि द्रव्यं सत्त्वादित्यादिव्यभिचारिणि नातिव्याप्तिः तादृशसम्बन्धावच्छिन्नप्रतियोगितानिवेशेनेत्याशयेनाह–तेनेति। संयोगादीत्यादिना स्वरूपादिसम्बन्धग्रहः। साध्यतावच्छेदकेति। साध्यतावच्छेदकधर्मातिरिक्तधर्मानवच्छिन्नत्वे सति साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्याभावो–ग्राह्य इत्यर्थः। एवं सम्बन्धांशेऽपि बोध्यम्। अन्यथेति। तथाऽनिवेशे सतीत्यर्थः। विशिष्टेति। महानसीयत्वविशिष्टवह्न्यभाव इत्यर्थः। आदिना वह्निघटोभयाभावसंग्रहः। एवञ्चोक्तार्थकसाध्यतावच्छेदकावच्छिन्नेत्यस्यानुपादाने महानसीयत्वविशिष्टवह्न्यभावं वह्निघटोभयाभावं, साध्यतावच्छेदकसम्बन्धावच्छिन्नानुपादाने च समवायसम्बन्धावच्छिन्नवह्न्यभावञ्च ग्रहीतुं शक्यतया तादृशाभावाधिकरण (पर्वतादि) निष्ठाभावप्रतियोगित्वाभावाद्धूमस्य वह्निमान्

### माथुरी

धूमस्याऽसम्भवः स्यात्। न च कपिसंयोगी एतद्वृक्षत्वादित्यादावेतद्वृक्षस्यापि तादृशसाध्याभाववत्त्वेन यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावादेतद्वृक्षत्वस्याव्याप्तिरिति वाच्यम्। किञ्चिदनवच्छिन्नायाः साध्याभावाधिकरणताया इह विवक्षितत्वात्। इत्थञ्च किञ्चिदनवच्छिन्नायाः साध्याभावाधिकरणताया गुणादावेव सत्त्वात् तत्र च हेतोरप्यभावसत्त्वान्नाव्याप्तिः। न च कपिसंयोगाभाववान् सत्त्वादित्यादौ साध्याभावस्य कपिसंयोगादेर्निरवच्छिन्नाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवास्य दोषस्य वक्ष्यमाणत्वात्। न च पृथिवी कपिसंयोगादित्यादौ पृथिवीत्वाभाववति जलादौ यावत्येव कपिसंयोगाभावसत्त्वादतिव्याप्तिरिति वाच्यम्, तन्निष्ठपदेन तत्र निरवच्छिन्नवृत्तिमत्त्वस्य विवक्षितत्वात्। इत्थञ्च पृथि-

### चन्द्रिका

धूमादित्यादिसद्धेतावसम्भव एव स्यादिति भावः। अथैतल्लक्षणे साध्यतावच्छेदकधर्म-सम्बन्धैतदुभयावच्छिन्नप्रतियोगिताकसाध्याभावनिवेशेऽपि कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकसद्धेतौ सर्वत्र साध्यतावच्छेदकधर्मावच्छिन्ना या तदवच्छेदकसम्बन्धावच्छिन्ना प्रतियोगिता तन्निरूपकाभावस्य यावदन्तर्गतहेत्वधिकरणैकदेशे ( मूलावच्छेदेन ) सत्तया तन्निष्ठाभावप्रतियोगित्वाभावादेतद्वृक्षत्वस्याव्याप्तिरित्याशयेनाह—न चेति। तादृशेति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नेत्यर्थः। समाधत्ते—किञ्चिदिति। निरवच्छिन्नाया इति यावत्। तथा च निरवच्छिन्नसाध्याभावाधिकरणता न वृक्षादिनिष्ठा किन्तु गुणादिनिष्ठैव तत्र हेतोरप्यभावसत्त्वान्नाव्याप्तिः। ननु निरवच्छिन्नसाध्याभावाधिकरणत्वप्रवेशे कपिसंयोगाभावसाध्यकस्थले साध्याभावस्य ( कपिसंयोगाभावाभावस्य ) कपिसंयोगरूपस्य ( अव्याप्यवृत्तिपदार्थस्य किञ्चिद्देशावच्छेदेनैव वृत्तितया ) निरवच्छिन्नाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिः स्यादित्याशङ्कते—न चेति। केवलान्वयिनीति। कपिसंयोगाभावस्य सकलपदार्थवृत्तित्वेन केवलान्वयित्वमिति भावः। नन्वेवमपि पृथिवी कपिसंयोगादित्यादौ साध्याभाव ( पृथिवीत्वाभाव ) वति जलादौ यावति कपिसंयोगाभावस्याव्याप्यवृत्तितया सत्त्वेन तत्प्रतियोगित्वं कपिसंयोगरूपहेतोरित्यतिव्याप्तिं शंकते—न च पृथिवीति। समाधानमाह—तन्निष्ठेति। सकलसाध्याभाववन्निष्ठपदेनेत्यर्थः। इत्थञ्चेति। यावत्सा-

## माथुरी

वीत्वाभावाधिकरणे जलादौ यावदन्तर्गते निरवच्छिन्नवृत्तिमानभावो न कपिसंयोगाभावः किन्तु घटत्वाद्यभाव एव तत्प्रतियोगित्वस्य हेतावसत्त्वान्नातिव्याप्तिः। न चैवमन्योन्याभावस्य व्याप्यवृत्तितानियमनये द्रव्यत्वाभाववान् संयोगवद्भिन्नत्वादित्यादेरपि सद्धेतुतया तत्राव्याप्तिः, संयोगवद्भिन्नत्वाभावस्य संयोगरूपस्य निरवच्छिन्नवृत्तेरप्रसिद्धेरिति वाच्यम्, अन्योन्याभावस्य व्याप्यवृत्तितानियमनये अन्योन्याभावस्याभावो न प्रतियोगितावच्छेदकस्वरूपः किन्त्वतिरिक्तो व्याप्यवृत्तिः, अन्यथा मूलावच्छेदेन कपिसंयोगिभेदाभावभानानुपपत्तेरिति संयोगवद्भिन्नत्वाभावस्यापि निरवच्छिन्नवृत्तिम-

## चन्द्रिका

ध्याभावाधिकरणे निरवच्छिन्नवृत्तिमदभावस्य निवेशे चेत्यर्थः। जलादौ=द्रव्ये, कपिसंयोगाभावस्य अव्याप्यवृत्तितया निरवच्छिन्नवृत्तिकत्वाभावात्। न चैवमिति। हेत्वभावे निरवच्छिन्नवृत्तिमत्त्वस्य निवेशे सतीत्यर्थः। ननु संयोगस्याव्याप्यवृत्तित्वेन संयोगानधिकरणदेशावच्छेदेन पृथिव्यादौ संयोगवद्भिन्नत्वस्य सत्त्वात्तत्र द्रव्यत्वाभावरूपसाध्यस्याभावाद् व्यभिचारितया द्रव्यत्वाभाववान् संयोगवद्भिन्नत्वादित्यत्र लक्षणागमनमुचितमेवेत्यत आह—अन्योन्याभावस्य व्याप्यवृत्तितेति। तथा च व्याप्यवृत्तिसंयोगवद्भेदस्य गुणादावेव सत्त्वेन तत्र द्रव्यत्वाभावात्मकसाध्यस्यापि वर्तमानत्वेन सद्धेतुतयाऽव्याप्तिः सुदृढा, तथा हि—साध्याभावस्या (द्रव्यत्वाभावाभावस्य=द्रव्यत्वरूपस्या) धिकरणे=द्रव्ये न निरवच्छिन्नवृत्तिमानभावः (संयोगवद्भेदाभावः=संयोगस्वरूपः) इत्यव्याप्तिः स्यादित्यत आह--अन्योन्याभावस्येति। अव्याप्यवृत्तिमदन्योन्याभावस्याभावो न प्रतियोगितावच्छेदकस्वरूपः किन्त्वतिरिक्तो व्याप्यवृत्तिरिति भावः। तथा च संयोगवद्भेदाभावस्य व्याप्यवृत्तित्वेन द्रव्यत्वाभावाभाव (द्रव्यत्व) वन्निष्ठनिरवच्छिन्नवृत्तितया तत्प्रतियोगित्वं संयोगवद्भिन्नत्वहेतोरिति नोक्ताव्याप्तिः। अन्यथेति। अव्याप्यवृत्तिमदन्योन्याभावाभावस्यातिरिक्तत्वानभ्युपगमे इत्यर्थः। एवञ्च कपिसंयोगिभेदाभावो यद्यतिरिक्तस्वरूपो न स्यात्कपिसंयोगस्वरूप एव स्यात्तदा मूलावच्छिन्नो वृक्षः कपिसंयोगिभेदाभाववानिति प्रतीतिरप्रमा स्यात्, मूले कपिसंयोगाऽसत्त्वादिति ध्येयम्। नन्वेकव्यक्तिसाध्याभावाधिकरणकस्थले—एतद्घटत्वाभाववान् पटत्वादित्यादावेतद्घटात्म-

माथुरी

त्वात्। वस्तुतस्तु—सकलपदमत्राशेषपरम्, न त्वनेकपरम्। एतद्घटत्वाभाववान् पटत्वादित्याद्येकव्यक्तिविपक्षके साध्याभावाधिकरणस्य यावत्त्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः। तथा च किञ्चिदनवच्छिन्नाया निरुक्तसाध्याभावाधिकरणताया व्यापकीभूतो योऽभावः हेतुतावच्छेदकसम्बन्धावच्छिन्नतत्प्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वं लक्षणार्थः। न च सत्त्वादिसामान्याभावस्यापि प्रमेयत्वादिना निरुक्तसाध्या-

चन्द्रिका

काधिकरणस्यैकव्यक्तित्वेन सकलसाध्याभावाधिकरणाऽप्रसिद्ध्याऽव्याप्तिः स्यादित्याशयेनाह—वस्तुतस्त्विति। सकलपदस्याशेषार्थत्वे लक्षणवाक्यार्थस्वरूपं प्रदर्शयति—तथा चेति। निरुक्तेत्यस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यर्थः। एवञ्च यथोक्त सम्बन्धावच्छिन्ननिरुक्तसाध्याभावत्वावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणतावन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकीभूतो यो धर्मः तद्वान् योऽभावस्तन्निरूपिताया हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया अवच्छेदकत्वपर्याप्त्यधिकरणहेतुतावच्छेदकधर्मवत्त्वमिति लक्षणार्थः = व्यापकत्वघटितसमुदितलक्षणार्थः। वह्निमान् धूमादित्यादौ— साध्यतावच्छेदक ( संयोग ) सम्बन्धावच्छिन्नसाध्यतावच्छेदक ( वह्नित्व ) धर्मावच्छिन्नप्रतियोगिताकसाध्याभावस्य निरवच्छिन्नाधिकरणता या जलह्रदादिनिष्ठा तद्व्यापकीभूतो हेत्वभावः ( धूमाभावः ), तथा हि तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं व्यापकत्वं, तच्च प्रकृते, वह्न्यभावाधिकरणतावन्निष्ठात्यन्ताभावो न धूमाभावाभावस्तस्य धूमस्वरूपत्वेन तत्र ( जलह्रदादौ ) असत्त्वात्किन्तु घटाद्यभाव एव तथा तत्प्रतियोगितावच्छेदकत्वं घटत्वादावनवच्छेदकत्वं हेत्वभाव ( धूमाभाव ) त्वे तद्वत्त्वं धूमाभाव इति भवति धूमाभावः साध्याभावाधिकरणताव्यापकः। हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नतादृशहेत्वभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्य धूमत्वरूपहेतुतावच्छेदके सत्त्वाल्लक्षणसमन्वयः। एतद्घटत्वाभाववान् पटत्वादित्यादावपि निरवच्छिन्नसाध्याभावाधिकरणतावति-एतद्घटे वर्तमानः पटत्वाभाव एव न तु पटत्वाभावाभाव इति तत्प्रतियोगितानवच्छेदकत्वस्य पटत्वाभावत्वे सत्त्वेन नाव्याप्तिः। ननु तादृशाधिकरणतावन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं यदि व्यापकत्वं तदा निरवच्छिन्नसाध्या ( द्रव्यत्वा ) भावाधिकरणतावति गुणादौ सत्त्वाभावाभावस्य सत्त्वेऽपि तत्प्रतियोगितानवच्छेदकप्रमेयत्वरूपधर्मवत्त्वस्य सत्त्वाभावेऽक्षततया निरुक्तसाध्याभावाधिकरणताव्यापकीभूताभावप्रतियोगितावच्छेदकधर्मवत्त्वस्य सत्तायां सत्त्वेन द्रव्यं सत्त्वादित्यादावतिव्याप्तिरित्याशयेन शङ्कते—न चेति।

**माथुरी**

भावाधिकरणताया व्यापकत्वात् द्रव्यं सत्त्वादित्यादावतिव्याप्तिः। तद्व-न्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्यापकत्वमित्युक्तौ तु निर्धू-मत्ववान् निर्वह्नित्वादित्यादावव्याप्तिः, निर्वह्नित्वाभावानां वह्निव्य-क्तीनां सर्वासामेव ( चालनीन्यायेन ) निर्धूमत्वाभावाधिकरणतावन्नि-ष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिति वाच्यम्। तादृशाधिकरण-ताया व्यापकतावच्छेदकं ,हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छि-न्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात्। व्यापकतावच्छेदकत्वं तु

**चन्द्रिका**

ननु अन्योन्याभावघटितव्यापकत्वलक्षणे--तादृशसाध्या (द्रव्यत्वा) भावाधिकरणता-वति गुणादौ सत्ताभाववद्भेदस्य सत्त्वेन साध्याभावाधिकरणतावन्निष्ठान्योन्याभाव-प्रतियोगितावच्छेदकत्वात्सत्ताभावस्य व्यापकत्वाभावेनातिव्याप्त्यभावेऽपि निर्धूमत्ववान् निर्वह्नित्वादित्यादावव्याप्तिरेव दोष इत्याह–तद्वन्निष्ठेति। साध्याभावाधिकरणता-वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वमित्यर्थः। निर्धूमत्ववान् = धूमाभाव-वान्। निर्वह्नित्वात् = वह्न्यभावात्। अव्याप्तौ हेतुमाह–निर्धूमत्वेति। एवञ्च सा-ध्याभावः ( निर्धूमत्वाभावः = धूमाभावाभावः ) धूमस्वरूपः तदधिकरणतावत्प-र्वते महानसीयवह्निमान्न, तादृशमहानसे च पर्वतीयवह्निमान्नेत्याकारकभेदीयप्रति-योगितावच्छेदकत्वस्य हेत्वभाव ( वह्न्यभावाभाव ) रूपवह्निव्यक्तिषु सर्वास्वेव सत्त्वेन कस्याश्चापि तादृशवह्निव्यक्तौ साध्याभावाधिकरणतावन्निष्ठान्योन्याभावप्रति-योगितानच्छेदकत्वविरहेण हेत्वभावे साध्याभावाधिकरणताव्यापकत्वविरहाद् भव-त्यव्याप्तिरिति हृदयम्। उत्तरयति--तादृशेति। निरवच्छिन्नायाः साध्याभावा-धिकरणताया इत्यर्थः। तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकाव-च्छिन्नप्रतियोगिताकसाध्याभावाधिकरणताया इत्यर्थो बोध्यः। यद्धर्मेति हेतुता-वच्छेदकधर्मः, एवं तद्धर्मपदेनाऽपि स एव ग्राह्यः। व्यापकतावच्छेदकत्व-न्त्विति। अत्यन्ताभावघटितं ग्राह्यमित्यर्थः। एवञ्च–साध्यतावच्छेदकसम्बन्धा-वच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावाधिकरणतावन्निष्ठात्यन्ताभा-वप्रतियोगितानवच्छेदकं यद्धेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं हेतोरिति समुदितलक्षणार्थः। तथा च निर्धूमत्व ( धूमाभाव ) वान् निर्वह्नित्वा ( वह्न्यभावा ) दित्यत्र निर्धूमत्वाभावा ( धूमा ) धिकरणतावत्-

माथुरी

तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वम् , न तु तद्वन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वम् , तद्वति निरवच्छिन्नवृत्तिमान् योऽभावस्तत्प्रतियोगितानवच्छेदकत्वं वा, प्रकृतव्यापकतायां प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्नवृत्तिमत्त्वस्य वा प्रवेशे प्रयोजनविरहात् । तेन पृथिवी कपिसंयोगादित्यादौ नातिव्याप्तिः, कपिसंयोगाभावत्वस्य निरुक्तव्यापकतावच्छेदकत्वविरहादित्येव परमार्थः ।

इति चतुर्थलक्षणम् ।

———

चन्द्रिका

( महानसादि ) निष्ठात्यन्ताभावो न निर्वह्नित्वाभावाभावः निर्वह्नित्वाभावस्य वह्निस्वरूपस्य तत्र सत्त्वात्किन्तु घटाद्यभाव एव तादृशः तत्प्रतियोगितानवच्छेदकमेव हेतुतावच्छेदकस्वरूपसम्बन्धावच्छिन्ननिर्वह्नित्वत्वावच्छिन्नप्रतियोगिताकाभावत्वं तद्धर्म ( निर्वह्नित्वत्व ) वत्त्वं निर्वह्नित्वे हेताविति लक्षणसमन्वयः । ननु सर्वत्राव्याप्यवृत्तिसाध्यकसद्धेतुस्थलेऽव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यं निरवच्छिन्नवृत्तित्वं वा अभावे निवेश्यमिति सिद्धान्तलक्षणे सिद्धान्तितत्वादत्रापि तथा निवेशे पृथिवी कपिसंयोगादित्यादौ वक्ष्यमाणरीत्याऽतिव्याप्तिरेव स्यादित्यत आह—न त्विति । एवञ्च प्रयोजनमुद्दिश्य व्यापकतावच्छेदकत्वशरीरे क्वचित् प्रतियोगिवैयधिकरण्यस्य, निरवच्छिन्नवृत्तिमत्त्वस्य वा निवेशेऽपि प्रकृते प्रयोजनाभावान्न तथा निवेश इति भावः । तेनेति । व्यापकतायामत्र प्रतियोगिवैयधिकरण्यस्य, निरवच्छिन्नवृत्तित्वस्य वाऽनिवेशेनेत्यर्थः । निरुक्तव्यापकतेति । प्रकृते व्यापकत्वशरीरे प्रतियोगिवैयधिकरण्यस्य, निरवच्छिन्नवृत्तिमत्त्वस्य वा निवेशे पृथिवी कपिसंयोगादित्यादावतिव्याप्तिध्रौव्यं, तथा हि—तादृशसाध्याभावा ( पृथिवीत्वाभावा ) धिकरणत्ववति जलादौ कपिसंयोगाभावाभावस्य = कपिसंयोगरूपस्याव्याप्यवृत्तितया प्रतियोगिसमानाधिकरणत्वात् , सावच्छिन्नवृत्तित्वाद्वा ग्रहीतुमशक्यतया घटपटाद्यभाव एव तथा तत्प्रतियोगितानवच्छेदकत्वस्य कपिसंयोगाभावत्वे सत्त्वेन साध्याभावाधिकरणताव्यापकतावच्छेदकत्वस्य हेत्वभावत्वे सौलभ्यादतिव्याप्तिः स्यात् । तयोरनिवेशे तु साध्याभावाधिकरणतावति जलादौ कपिसंयोगाभावाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकमेव हेत्वभावत्वमिति व्यापकतावच्छेदकत्वविरहेणातिव्याप्त्यभाव इति भावः ।

इति चतुर्थलक्षणम् ।

———

## मू० साध्यवदन्यावृत्तित्वं वा, केवलान्वयिन्यभावात् ।

### माथुरी

अत्रापि प्रथमलक्षणोक्तरीत्या हेतौ साध्यवदन्यवृत्तित्वाभाव इत्यर्थः। तादृशवृत्तित्वाभावश्च तादृशवृत्तित्वसामान्याभावो बोध्यः। तेन धूमवान्वह्नेरित्यादौ धूमवदन्यजलह्रदादिवृत्तित्वाभावस्य, धूमवदन्यवृत्तित्व—जलत्वोभयाभावस्य च हेतौ सत्त्वेऽपि नातिव्याप्तिः। साध्यवदन्यत्वञ्च—अन्योन्याभावत्वनिरूपित-साध्यवत्त्वावच्छिन्नप्रतियोगिताकाभाववत्त्वम् , तेन वह्निमान् धूमादित्यादौ तत्तद्वह्निमदन्यस्मिन् धूमादेर्वृत्तावपि नाव्याप्तिः। न वा वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य स्वावच्छिन्नभिन्नभेदरूपस्याधिकरणे पर्वतादौ धूमस्य वृत्तावप्यव्याप्तिः,

### चन्द्रिका

यत्तद्घटितत्वेन चतुर्थलक्षणस्याननुगममाशंक्य लक्षणान्तरमाह—साध्यवदन्येति। हेताविति। साध्यवान् महानसादिः तदन्यो जलह्रदादिस्तद्वृत्तित्वाभावो हेताविति वह्निमान् धूमादित्यादौ लक्षणसमन्वयः। तादृशवृत्तित्वसामान्याभाव इति। साध्यवदन्यनिरूपितवृत्तितात्वेतरधर्मानवच्छिन्न-साध्यवदन्यनिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावो ग्राह्यः, अन्यथा धूमवान् वह्नेरित्यादौ साध्य ( धूम ) वदन्यजलह्रदादिनिरूपितवृत्तित्वाभावं, साध्यवदन्यनिरूपितवृत्तित्व–जलत्वोभयाभावञ्चादायातिव्याप्तिः स्यादित्यावेदयति टीकाकारः – तेनेत्यादिना। तेनेत्यस्य तादृशवृत्तित्वसामान्याभावप्रवेशेनेत्यर्थः। एवमन्यत्सर्वं प्रथमलक्षणोक्तमत्राप्यनुसन्धेयम्। नन्वेवमपि तत्तद्वह्निमदन्यस्मिन्सपक्षे धूमस्य सत्त्वेन, पक्षवृत्तितत्समनियतान्तरमादाय चाव्याप्तिः स्यादित्यत आह—साध्यवदन्यत्वञ्चेति। साध्यवत्त्वावच्छिन्नप्रतियोगिताकाभावनिवेशस्य फलमाह—तेनेति। अन्योन्याभावत्वनिरूपितप्रतियोगितानिवेशस्य फलमाह—न वेति। स्वावच्छिन्नेति। लक्षणघटकीभूतयादृशाभावो भवेत् स एव स्वावच्छिन्नेत्यत्र 'स्व' पदेन ग्राह्यः, तथा च—अन्योन्याभावत्वनिरूपितत्वस्यानिवेशे वह्निमान्नास्तीत्यत्यन्ताभावोऽपि स्वपदग्राह्यः तदवच्छिन्नो = वह्निमच्छून्यो भूतलादिः तद्भिन्नो घटादिः तद्भेदस्य

### माथुरी

तस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताया अत्यन्ताभावत्वनिरूपितत्वेन अन्योन्याभावत्वनिरूपितत्वविरहात्। अन्योन्याभावत्वनिरूपितत्वञ्च तादात्म्यसम्बन्धावच्छिन्नत्वमेव। साध्यवत्त्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यम्, तेन वह्निमान् धूमादित्यादौ वह्निमत्त्वावच्छिन्नप्रतियोगिताकस्य समवायेन वह्निमतोऽन्योन्याभावस्याधिकरणे पर्वतादौ धूमादेर्वृत्तावपि नाव्याप्तिः। सर्वमन्यत्प्रथमलक्षणोक्तदिशाऽवसेयम्।

### चन्द्रिका

पर्वतादौ सत्त्वात्। अथवा—स्वपदग्राह्यो वह्निमान्नास्तीत्याकारकोऽत्यन्ताभावः तदवच्छिन्नो वह्निमच्छून्यो देशः तद्भिन्नः पर्वतावयवादिः तद्भेदः पर्वते तत्रैव वह्निमान्नास्तीत्यत्यन्ताभावोऽपि स्यात् समनियताभावयोरैक्येन स्वावच्छिन्नभिन्नभेदाधिकरणे पर्वतादौ वह्निमान्नास्तीत्यत्यन्ताभावस्यापि साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावरूपत्वेन सत्त्वात्तत्र च धूमस्यापि सत्त्वेनाव्याप्तिः स्यादिति भावः। अन्योन्याभावत्वनिरूपितत्वनिवेशे वह्निमान्नास्तीत्यभावीयप्रतियोगिताया अत्यन्ताभावत्वनिरूपितत्वेनान्योन्याभावत्वनिरूपितवह्निमत्त्वावच्छिन्नप्रतियोगिताकवह्निमद्भेदस्य धूमाधिकरणे कथमप्यसत्त्वेन नोक्तदोष इति विशदयति—तस्येत्यादिनेति बोध्यम्। नन्वेवमपि वह्निमदत्यन्ताभावस्य स्वावच्छिन्नभिन्नभेदस्वरूपत्वेन तदीयप्रतियोगितायामपि अन्योन्याभावत्वनिरूपितत्वमस्तीति दोषस्तदवस्थ एवेत्यत आह—अन्योन्येति। तथा सति अत्यन्ताभावत्वनिरूपितप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वविरहेणान्योन्याभावत्वनिरूपितत्वाभावान्न वह्निमदत्यन्ताभावमादायाव्याप्तिरिति भावः। ननु अन्योन्याभावत्वनिरूपितसाध्यवत्त्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वसामान्याभाव इति लक्षणस्वरूपसत्त्वेऽपि समवायेन वह्निमान् पर्वतावयवस्तदन्यः पर्वतादिः तत्र धूमहेतोः सत्त्वेनाव्याप्तिः स्यादेवेत्यत आह—साध्यवत्त्वञ्चेति। समवायावच्छिन्नवह्निमान्नेत्यभावीयप्रतियोगितावच्छेदकताया वह्निनिष्ठायाः साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वविरहेण नाव्याप्तिरिति भावः। ननु तथापि साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदस्य कालिकेनाधिकरणं पर्वतोऽपीति पुनरव्याप्तिस्तदवस्थेत्यत आह—सर्वमन्यदिति। एवञ्च यथा प्रथम-

माथुरी

यथा चास्य न तृतीयलक्षणाभेदस्तथोक्तं तत्रैवेति समासः ॥

---

सर्वाण्येव लक्षणानि केवलान्वय्यव्याप्त्या दूषयति—केवलान्वयिन्यभावादिति। पञ्चानामेव लक्षणानाम्—इदं वाच्यं ज्ञेयत्वादित्यादिव्याप्यवृत्तिकेवलान्वयिसाध्यके, द्वितीयादिलक्षणचतुष्टयस्य तु कपिसंयोगाभाववान् सत्त्वादित्याद्यव्याप्यवृत्तिकेवलान्वयिसाध्यकेऽपि चाभावादि-

चन्द्रिका

लक्षणे तादृशसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्व—तदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धेन साध्याभावाधिकरणता विवक्षिता तथा प्रकृतेऽपीति भावसाध्यकस्थले स्वरूपस्यैव तादृशसम्बन्धत्वेन नोक्तदोषः। एवं हेतुतावच्छेदकसम्बन्धस्यापि प्रथमलक्षणवत्परिष्कारो बोध्य इति। यथा चेति। अधिकरणत्वप्रवेशाप्रवेशाभ्यामित्यर्थः। तत्रैवेति। तृतीयलक्षण एवेत्यर्थः। इति समासः=इति संक्षेपः ॥

---

पञ्चानामेवोक्तलक्षणानां व्याप्तिस्वरूपत्वाभावे हेतुमाह मूलकारः—केवलान्वयिन्यभावादिति। व्याप्यवृत्तीति—स्वाधिकरणवृत्त्यभावप्रतियोगिभिन्नत्वं व्याप्यवृत्तित्वम्। केवलान्वयित्वञ्च—अत्यन्ताभावाप्रतियोगित्वम्। तथा च यत्रोक्तं व्याप्यवृत्तित्वं, केवलान्वयित्वञ्च वर्तते तद्व्याप्यवृत्तिकेवलान्वयीति कथ्यते, यथा—वाच्यत्व—प्रमेयत्वादिकम्, अत्र स्वपदग्राह्यवाच्यत्वाद्यधिकरणे घटादौ न वाच्यत्वाद्यभावः किन्तु पटाद्यभाव एव तत्प्रतियोगिभिन्नत्वं वाच्यत्वादौ। एवं वाच्यत्वादेः सकलपदार्थवृत्तितया कुत्राप्यत्यन्ताभावो नास्तीति भवति वाच्यत्वादिकं व्याप्यवृत्ति-केवलान्वयीति तत्साध्यके पञ्चानां लक्षणानामव्याप्तिः। यत्रोक्तव्याप्यवृत्तिलक्षणासत्त्वं यथा—संयोगाभावादिसाध्यकस्थले स्वा (संयोगाभावा) धिकरणे द्रव्य एव संयोगाभावाभावस्यापि सत्त्वेन निरुक्तव्याप्यवृत्तित्वाभावात् केवलं केवलान्वयित्वमित्यव्याप्यवृत्तिकेवलान्वयित्वं तत्र द्वितीयादिलक्षणचतुष्टयस्याव्याप्तिं योजयति—द्वितीयादीति। न च संयोगाभावसाध्यकेऽपि प्रथमलक्षणस्याव्याप्तिः कथं नेति

माथुरी

त्यर्थः, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावस्य, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य चाप्रसिद्धत्वात्। कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वस्याप्रसिद्धत्वाच्चेति भावः। तृतीयलक्षणस्य केवलान्वयिसाध्यकासत्त्वञ्च तद्व्याख्यानावसर एव प्रपञ्चितम्। एतच्चोपलक्षणम्, द्वितीये कपिसंयोगी एतद्वृक्षत्वादित्यादावप्यव्याप्तिः, अधिकरणभेदेन अभावभेदे मानाभावेन कपिसंयोगवद्भिन्नवृत्तिकपिसंयोगाभाववति वृक्षे एतद्वृक्षत्वस्य वृत्तित्वात्।

न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वं वक्तव्यम्, एवञ्च वृक्षस्य विशिष्टाधिकरणत्वाभावान्नाव्याप्तिरिति वाच्यम्,

चन्द्रिका

वाच्यम्, तत्र संयोगाभावाभावस्य प्रतियोगिस्वरूपत्वानङ्गीकारेण संयोगाभावस्याऽव्याप्यवृत्तितया तदभावस्य च प्रसिद्धयाऽव्याप्तिविरहादिति ध्येयम्। एवञ्च पञ्चविधलक्षणमध्ये कस्यचिल्लक्षणस्य सामान्याभावघटिततया कस्यचिच्च साध्यवत्सामान्यभेदघटिततया वाच्यत्वादिसाध्यके तादृशसामान्याभावस्य तादृशसामान्यभेदस्य चाप्रसिद्धत्वात्सर्वलक्षणेष्वव्याप्तिर्भवतीति भावः। कपिसंयोगाभावसाध्यकस्थले साध्यवत्सामान्यभेदाऽप्रसिद्धया द्वितीय—तृतीय—पञ्चमेष्वव्याप्तिं चतुर्थलक्षणेऽपि कपिसंयोगरूपसाध्याभावस्य निरवच्छिन्नाधिकरणत्वाप्रसिद्धया चाव्याप्तिं प्रदर्शयति—साध्यतेत्यादि। अव्याप्यवृत्तिकेवलान्वयिनि चतुर्थलक्षणस्याव्याप्तौ बीजमाह—कपीति। ननु वाच्यत्ववद्घटाद्यन्योन्याभावस्य प्रसिद्धया कथं तृतीयलक्षणस्य केवलान्वयिन्यव्याप्तिरित्यत आह—तृतीयेति। केवलान्वयतिरिक्तेऽव्याप्त्यादिदोषमाह—एतच्चोपलक्षणमिति। अभावभेदे = जलादिवृत्तिकपिसंयोगाभावात्, वृक्षादिवृत्तिकपिसंयोगाभावस्य भिन्नत्वे। विशिष्टाधिकरणत्वाभावात् = कपिसंयोग-

माथुरी

साध्याभावपदवैयर्थ्यापत्तेः । साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वात् । सद्धेतौ हेत्वधिकरणे विशिष्टाधिकरणत्वाभावादेवाऽसम्भवाभावात् । तृतीये साध्यवत्प्रतियोगिकान्योऽन्याभावमात्रस्य घटकत्वे चालनीन्यायेनान्योन्याभावमादाय नानाधिकरणकसाध्यके वह्निमान् धूमादित्यादावव्याप्तिश्चेत्यपि बोध्यम् ।

इति श्रीमथुरानाथतर्कवागीशविरचितं व्याप्तिपञ्चकरहस्यम् ।

——

चन्द्रिका

वद्भिन्नजलादिवृत्तित्वविशिष्टस्य कपिसंयोगाभावस्याधिकरणत्वाभावात् । समाधत्ते-साध्याभावेति । विशिष्टाधिकरणत्वाभावादेव = साध्यवद्भिन्नवृत्तित्वविशिष्टस्याधिकरणत्वाभावादेव । असम्भवाभावादिति । तथा च साध्याभावपदाभावेऽपि साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यापि लक्षणस्वरूपत्वे वह्निमद्भिन्न ( जलादि ) वृत्तित्वविशिष्टस्य द्रव्यत्वादेरधिकरणत्वस्य जलादावेव सत्त्वेन तत्र धूमहेतोरसत्त्वादेव लक्षणसमन्वये साध्याभावपदं व्यर्थमेवेति भावः । ननु साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योऽन्याभावविवक्षायां तृतीयलक्षणे वह्निमान् धूमादित्यादौ दोषाभावात्तदुद्भावनमसंगतमत आह--तृतीय इति । साध्यवत्प्रतियोगिकेति--साध्यवत्त्वावच्छिन्नाघटितस्येति मात्रपदार्थो बोध्यः । चालनीन्यायेन = महानसीयवह्निमद्भेदं पर्वतादौ, पर्वतीयवह्निमद्भेदं महानसादौ चादायेत्यर्थः ।

इति श्रीमथुरानाथतर्कवागीशविरचित-व्याप्तिपञ्चकरहस्ये

चन्द्रिका टीका समाप्ता । ॐ

——

ॐ

॥ श्रीगणेशायनमः ॥

# व्याप्तिपञ्चकम्

## ॥ जागदीशीटीकासहितम् ॥

मू० नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः ? न तावदव्यभिचरितत्वम् । तद्धि न साध्याभाववदवृत्तित्वम् ।

दीधितिः

समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते—नन्वित्यादिना ।

जागदीशी

ननु "व्याप्तिग्रहोपायश्च वक्ष्यते" इत्युक्तं प्राक् निरूप्यते च व्याप्तिरित्यर्थान्तरमत आह—समारब्धेति । समारब्धा या अनुमान-

चन्द्रिका

नन्वितः पूर्वग्रन्थे ( अनुमितिग्रन्थे ) 'व्याप्तिग्रहोपायश्च वक्ष्यते' इति प्रतिज्ञातं निरूप्यते च नन्वनुमितिहेत्वित्यादिना व्याप्तिस्वरूपमित्यर्थान्तरमित्याशङ्कामुन्मूलयितुमाह दीधितिकारः—समारब्धेति । सम्यगारम्भविषयीकृता या अनुमानप्रामाण्य-

## मू० साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम् ।

दीधितिः

साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यकसद्धेताव्व्याप्ति-माशङ्क्याह— **साध्यवद्भिन्नेति ।**

जागदीशी

प्रामाण्यपरीक्षा ( परमतनिराकरणपूर्वकं स्वमतेनानुमानप्रामाण्यसाधनं ) त्कारणीभूतो यो व्याप्तिग्रहस्तदुपायप्रतिपादनमित्यर्थः । व्याप्तिज्ञानं त विना "अयं व्याप्तिग्रहोपाय" इति ज्ञातुमशक्यत्वात् व्याप्तेस्तत्र विशेष-णत्वादिति भावः ।

तथा च व्याप्तिग्रहोपायाभिधानोपयुक्तत्वेन तन्निरूपणमिति हृदयम् । अव्याप्यवृत्तीति । कपिसंयोग्येतद्वृक्षत्वादित्यादावित्यर्थः । इदञ्च येन

चन्द्रिका

परीक्षा—परमतखण्डनपूर्विका स्वमतेनानुमानप्रामाण्यानुमितिः, तत्कारणीभूतो यो व्याप्तिग्रहस्तदुपायस्य या प्रतिपत्तिस्तदनुकूलव्यापारकारणं यद्व्याप्तिस्वरूपनिरूपणं तद्विषयकाद्यकृतिमान् मूलकार इति वाक्यार्थः । अनुमानप्रामाण्यसाधनम्=अनु-माननिष्ठप्रामाण्यानुमितिः । तत्कारणीभूतः = निरुक्तप्रामाण्यानुमितिकारणीभूतः । व्याप्तिग्रहः =प्रमितिकरणतावच्छेदकधर्मः प्रामाण्यव्याप्य इत्याकारकव्याप्तिनिश्चयः । तदुपायप्रतिपादनम्=तादृशव्याप्तिग्रहकारणज्ञानानुकूलव्यापारः । व्याप्तिज्ञानं विना व्याप्तिग्रहोपायज्ञानाभावे हेतुमाह—व्याप्तेरिति । तथा च विशिष्टबुद्धौ विशेषण-ज्ञानस्य हेतुतया व्याप्तिग्रहोपाये व्याप्तिग्रहस्य व्याप्तिग्रहे च व्याप्तेर्विशेषणताऽस्तीति व्याप्तिज्ञानं विना कथं व्याप्तिग्रहोपायपरिज्ञानं स्यादिति भावः । ननु षड्विधसंगति-मध्ये का सङ्गतिरस्य ग्रन्थस्य पूर्वग्रन्थेन सहेति जिज्ञासायामाह—तथा चेति । एवञ्च 'व्याप्तिग्रहोपायाभिधानोपयुक्तत्वेने' ति कथनेनानुमानप्रामाण्योपपादक-व्याप्तिस्वरूपनिरूपणे उपोद्घात एव सङ्गतिः सम्भवतीति हृदयपदेन ध्वन्यते । तन्निरूपणम्=व्याप्तिस्वरूपनिरूपणम् । दीधितौ—अव्याप्यवृत्तीति । अव्याप्य-वृत्तित्वं=स्वाधिकरणवृत्त्यभावप्रतियोगित्वम् । अव्याप्यवृत्तिसाध्यकसद्धेतुस्थलमाह टीकायां—कपिसंयोगीति । संयोगसामान्यस्याव्याप्यवृत्तित्वे विवादग्रासादाह— **पीकित । सद्धेतुत्वरक्षार्थ—मेतदिति । इदञ्चेति**—कपिसंयोगी एतद्वृक्षत्वादि-

जागदीशी

रूपेण येन सम्बन्धेन च साध्यत्वं तदवच्छिन्नस्य साध्याभावस्य प्रवेशमादृत्य, अन्यथा तु व्याप्यवृत्तिसाध्यकेऽपि विशिष्टाभावादिकमादाय दोषो बोध्यः। अव्याप्यवृत्तिसाध्यकेऽपि आकाशादिहेतावव्याप्त्यभावादाह— सद्धेताविति। वृत्तिमद्धेताविति तदर्थः। अव्याप्यवृत्ति साध्यं यत्र तत्र सन् वर्तमानो यो हेतुस्तत्रेत्यर्थः। तेन संयोगाभाववान् गुणत्वादित्यादावव्याप्त्यभावेऽपि न क्षतिरित्यपि वदन्ति।

चन्द्रिका

त्यादावव्याप्तिदानञ्चेत्यर्थः। येन रूपेणेति। साध्यतावच्छेदक (वह्नित्वादि) रूपेण येन सम्बन्धेन=साध्यतावच्छेदक (संयोगादि) सम्बन्धेनेति बोध्यम्। एवञ्च यादृशधर्मावच्छिन्नं यादृशसम्बन्धावच्छिन्नं साध्यं भवति तादृशधर्मावच्छिन्नतादृशसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगिताकसाध्याभावस्य प्रवेशमादृत्येति ज्ञेयम्। यादृशधर्मावच्छिन्नेत्यस्यापि साध्यतावच्छेदकधर्मातिरिक्तधर्मानवच्छिन्नत्वे सति साध्यतावच्छेदकधर्मावच्छिन्नत्वमर्थो बोध्यः। विस्तरस्तु गूढार्थतत्त्वालोके द्रष्टव्यः। अथैतादृशार्थस्य किम्प्रयोजनमित्याह—अन्यथेति। तादृशरूपेण साध्याभावस्याप्रवेशे इत्यर्थः।

व्याप्यवृत्तिसाध्यकेऽपीति। द्रव्यत्ववान् पृथिवीत्वादित्यादि—व्याप्यवृत्तिसाध्यकसद्धेतावपि जलत्वादिविशिष्टद्रव्यत्वाद्यभावम्, आदिपदेन जलत्वद्रव्यत्वोभयाभावं, कालिकेन द्रव्यत्वाभावञ्चादायाव्याप्तिसम्भवेऽव्याप्यवृत्तिसाध्यकेति कथनं न सङ्गच्छेतेति भावः।

नन्वव्याप्तिकथनादेव सद्धेताविति लब्धे पुनः सद्धेताविति पदं व्यर्थमेव दीधितावित्यत आह—टीकायामव्याप्यवृत्तीति। संयोगसमवायादिसम्बन्धेन कुत्राप्यवृत्तिगगनादिहेतुके—वह्निमान् गगनादित्यादौ साध्याभावाधिकरणे जलह्रदादौ गगनादिहेतोरसत्त्वेनाव्याप्त्यभावादाह—सद्धेतावितीत्यर्थः। एतस्याभिमतार्थं स्पष्टयति—अव्याप्यवृत्ति साध्यं यत्रेत्यादि। एवञ्च गगनादिहेतोरवृत्तितया विवक्षितसद्धेतुत्वविरहात्तत्र, संयोगाभावस्य द्रव्य एवाव्याप्यवृत्तितया तत्र गुणत्वस्यावृत्तित्वाद्विवक्षिततादृशसद्धेतुत्वेन तस्य धर्तुमशक्यत्वात् संयोगाभाववान् गुणत्वादित्यादौ चाव्याप्त्यभावेऽपि अव्याप्यवृत्तिसाध्यकसद्धेतुमात्रेऽव्याप्त्यभिधानं नासङ्गतम्। तेन=तस्य तादृशार्थकरणेन।

दीधितिः

## साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमर्थः ।

जागदीशी

ननु साध्यवद्भिन्ने यः साध्याभाववान्--इत्यर्थे साध्याभाववत्पदवैयर्थ्यं साध्यवद्भिन्नावृत्तित्वस्यैव सम्यक्त्वात् । न चावृत्तित्वेन समं साध्यवद्भिन्नस्यान्वयाविवक्षणात् साध्याभाववता सममेव तादात्म्येनैवान्वयविवक्षणान्न वैयर्थ्यमिति वाच्यम्, तथा सति साध्यवद्भिन्नात्मको यो मत्वर्थः सम्बन्धी तदवृत्तित्वस्यैव सम्यक्त्वे साध्याभाववत्त्वैयर्थ्यगौरवात् । अतः सप्तमीसमासं समर्थ्य व्याचष्टे साध्यवद्भिन्न इति । तथा च साध्यवद्भिन्नस्य वृत्तावनन्वयात् यथासन्निवेशे न वैयर्थ्यम् ।

चन्द्रिका

गौरवभिया साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयसमासस्यैवाङ्गीकार्यतया साध्याभाववत्पदवैयर्थ्यमिति शङ्कते--नन्विति । ययोः पदयोः तादात्म्येनान्वयो भवति तत्रान्यतरेणान्यतरो व्यर्थो न भवति यथा नीलघट इत्यादौ नीलपदघटपदयोस्तादात्म्येनान्वय इष्ट इति न नीलपदेन घटपदेन वा इतरो व्यर्थो भवति तथा प्रकृतेऽपि साध्याभाववत्-साध्यवद्भिन्नपदयोस्तादात्म्येनान्वयो विवक्षित इति न साध्याभाववत्पदवैयर्थ्यमित्याशयेनाशङ्कते--न चेति ।

मत्वर्थ इति । मत्वर्थेन तादात्म्येनान्वयेऽपि साध्यवद्भिन्नात्मको यः मत्वर्थः सम्बन्धी तदवृत्तित्वमित्येतावतापीष्टसिद्धौ साध्याभावपदवैयर्थ्यमिति विशदयति--तथा सतीत्यादिना ।

साध्यवद्भिन्ने यः साध्याभाव इति सप्तमीसमासाश्रयणेन साध्याभावपदस्य न वैयर्थ्यमित्याह--तथा चेति । साध्यवद्भिन्नस्य = साध्यवद्भेदाधिकरणस्य । वृत्तौ = वृत्तित्वाभावप्रतियोगिनि वृत्तित्वे । न वैयर्थ्यमिति--तथा च साध्यवद्भिन्नवृत्तिसाध्याभावाधिकरणवृत्तित्वाभावापेक्षया साध्यवद्भिन्नवृत्तित्वाभावस्यातिरिक्ततया न तस्य वैयर्थ्यसम्भावना, परस्परं तद्वृत्तिधर्मयोः सामानाधिकरण्यविरहादिति भावः ।

जागदीशी

साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणं त्वव्याप्यवृत्तिसाध्यकसंग्रहार्थमेवेत्याशयः । साध्यवद्भिन्नवृत्तिद्रव्यत्वादिमति पर्वतादौ धूमादेः सत्त्वादव्याप्तिरसम्भवो वा स्यादतः—साध्याभावेति । न च कपिसंयोग्येतद्वृक्षत्वादित्यादेः सङ्ग्रहार्थमधिकरणभेदेनाभाव-

चन्द्रिका

ननु साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वमितिलक्षणापेक्षया लघुतरस्यैव साध्याभाववदवृत्तित्वमित्यस्य लक्षणत्वसम्भवे साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणं निष्प्रयोजनमित्यत आह—साध्याभावे इति । तथा च कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकस्थलाव्याप्तिवारणार्थमेव तादृशविशेषणम्, अन्यथात्र मूलावच्छेदेन वृक्षेऽपि कपिसंयोगाभाववति एतद्वृक्षत्वरूपहेतोः सत्त्वेनाव्याप्तिः स्यादेवेति भावः ।

अथाव्याप्यवृत्तिसाध्यकस्थलानुरोधेन साध्यवद्भिन्नवृत्तित्वस्य सार्थकत्वेऽपि साध्यवद्भिन्नवृत्तिमदवृत्तित्वमित्येवास्तु लक्षणं किं साध्याभावपदेनेति शङ्कायामाह—साध्यवद्भिन्नवृत्तीति । एवञ्च साध्याभावपदाऽसत्त्वे साध्यवत्पर्वतादिभिन्ने (जलादौ) वृत्ति द्रव्यत्वादि तद्वत्त्वं पर्वतादावपि तत्र हेतोः (धूमस्य) सत्त्वात् वह्निमान् धूमादित्यादावव्याप्तिः स्यादित्याशयः ।

असम्भवो वेति 'वा' कारोऽनास्थायाम्, तथा हि—वह्निमान् गगनादित्याद्यवृत्तिगगनादिहेतुकस्थलानां लक्ष्यत्वे साध्याभावपदानुपादानेऽपि वह्निमद्भिन्नजलादिवृत्तिद्रव्यत्वादिमत्यपि पर्वतादौ गगनादिहेतोरवृत्तितया लक्षणसमन्वयादव्याप्तिरुक्ता । अवृत्तिगगनादिहेतुकानामलक्ष्यत्वे सर्वत्र वृत्तिमत्सद्धेतावुक्तरीत्याऽसम्भव एव स्यादिति हृदयम् ।

अथैवमपि कपिसंयोगी एतद्वृक्षत्वादित्यादौ साध्यवद्भिन्ने गुणादौ वर्तमानः साध्याभावः (कपिसंयोगाभावः) तस्य मूलावच्छेदेन वृक्षेऽपि सत्त्वात्तत्रैतद्वृक्षत्वरूपहेतोरपि सत्त्वमित्यव्याप्तिः स्यादित्यगत्याऽधिकरणभेदेनाभावभेदोऽवश्यमङ्गीकार्यः, तथा सति साध्यवद्भिन्नवृत्त्यभाववदवृत्तित्वस्यैव लक्षणत्वे पूर्वोक्ताव्याप्तिवारणसम्भवः, तथा हि कपिसंयोगाभाववति गुणादौ वृत्तिर्यो घटाद्यभावः तस्य (अधिकरणभेदेनाभावभेदाङ्गीकारेण) वृक्षादौ सत्त्वविरहेण गुणादावेव सत्त्वं तत्र हेतोर (एतद्वृक्षत्वस्या) प्यसत्त्वेन दोषाभावात् साध्यपदवैयर्थ्यमिति शङ्कते—न चेति ।

### जागदीशी

भेदमादत्यैव लक्षणमिदं कार्यं तथा च साध्यवद्भिन्ने योऽभावः तद्वदवृत्तित्वस्यैव सम्यक्त्वे साध्यपदवैयर्थ्यमिति वाच्यम्, प्रतियोगितासंसर्गेण साध्यीयत्वेनैव साध्याभावस्य प्रवेशः, न त्वभावत्वेनापीति तद्वैयर्थ्यशंकानवकाशात्।

वस्तुतस्तु स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्ने वर्तते यः साध्यतावच्छेदकसम्बन्धेन साध्यीयोऽभावस्तद्वदवृत्तित्वमर्थः। तथा च साध्यतावच्छेदकसम्बन्धेन साध्यीयत्वार्थकस्य साध्यपदस्यानुक्तौ स्वप्रतियोगितावच्छेदकीभूतसमवायादिसम्बन्धेन वह्न्यादिमतोऽन्यस्मिन् पर्वतादौ यः समवायाद्यवच्छिन्नवह्न्यभावस्तद्वति धूमादेः सत्त्वादव्याप्तिः स्यादतस्तदुपात्तमिति नव्याः।

### चन्द्रिका

प्रतियोगितेति। प्रतियोगितानिरूपितानुयोगित्वसम्बन्धेन साध्यविशिष्टाभावघटितस्यैव लक्षणस्य स्वीकार्यतया साध्यपदाऽसत्त्वे एतादृशविवक्षितलक्षणाऽसत्त्वेन साध्यपदाऽघटितलक्षणस्य लक्षणान्तरत्वमेव स्यादित्थञ्च स्वसमनियतलघुधर्मान्तरघटितत्वरूपवैयर्थ्यंलक्षणाऽलक्ष्यतया न लक्षणान्तरेण लक्षणान्तरस्य वैयर्थ्यशङ्कावकाश इति भावः।

ननु साध्यपदस्य वैयर्थ्याऽभावेऽपि साध्यवद्भिन्नवृत्त्यभाववदवृत्तित्वमित्येतावतापि सर्वदोषापहारसम्भवे साध्यपदस्य निष्प्रयोजनत्वं तु स्यादेवेत्यत आह– वस्तुतस्त्विति। अत्र स्वपदं साध्याभावपरम्। एवञ्च कपिसंयोगादिसाध्यकस्थले स्वपदग्राह्यकपिसंयोगाभावप्रतियोगि ( कपिसंयोगनिष्ठप्रतियोगि ) तावच्छेदक ( समवाय ) सम्बन्धेन साध्यवत् ( कपिसंयोगवत् ) भिन्ने ( गुणादौ ) वर्तते यः साध्यतावच्छेदक ( समवाय ) सम्बन्धेन साध्यीयोऽभावः=साध्यनिरूपितोऽभावः तद्वति गुणादाववृत्तित्वं हेतोरित्यर्थः। अत्र साध्यतावच्छेदकसम्बन्धेन साध्यनिरूपिताऽभावग्राहकस्य साध्यपदस्यानुक्तौ वह्निमान् धूमादित्यादावपि स्वप्रतियोगितावच्छेदक ( विनिगमनाविरहात् ) यत्किञ्चित्समवायादिसम्बन्धेन साध्यवद्भिन्ने ( समवायेन वह्निमान् वह्न्यवयवः तद्भिन्ने ) पर्वतादौ वर्तते योऽभावः=तादृशसमवायसम्बन्धेन वह्न्यभावः तत्र हेतोः=धूमस्य सत्त्वादव्याप्तिः स्यादतः साध्यपदमुपात्तमिति ध्येयम्। स्वप्रतियोगितेत्यादेः=स्वनिरूपितप्रतियो-

जागदीशी

केचित्तु—व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वादिविरुद्धधर्माध्यासात् संयोगाद्यभावस्यैव द्रव्यगुणाद्यधिकरणभेदेन भेदः, न तु गगनाद्यभावस्य मानाभावात्। तथा च साध्यवद्भिन्नवृत्तिगगनाद्यभाववति पर्वतादौ धूमादेः सत्त्वादव्याप्तिरतः साध्यपदमित्याहुः, तन्मन्दम्, गुणे गगनाद्यभावे गुणत्वादिसामानाधिकरण्यम् न तु द्रव्ये गगनाद्यभावे तथात्वमित्यादिप्रतीत्या गगनाद्यभावस्यापि गुणत्वादिसामानाधिकरण्यतदभावयोर्विरुद्धधर्मयोः सम्भवादिति दिक्।

चन्द्रिका

गितावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्वावच्छिन्नाधिकरणनिरूपितवृत्तितावान् यः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टोऽभावस्तदधिकरणनिरूपितवृत्तित्वाभाव इत्यर्थो बोध्यः ॥

केचित्त्विति। कपिसंयोगाद्यभावस्य गुणादौ व्याप्यवृत्तित्वम् (स्वाधिकरणव्यक्त्यवृत्तित्वम्) द्रव्येऽव्याप्यवृत्तित्वम् (स्वाधिकरणव्यक्तिवृत्तित्वम्) स्वम् = अभावः। इति तत्र व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वविरुद्धधर्माध्यासादधिकरणभेदेनाभावभेदो भवतु न तु गगनाद्यभावस्य तस्य सर्वत्र व्याप्यवृत्तितया व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वविरुद्धधर्माध्यासासम्भवेनाधिकरणभेदेऽपि गगनाद्यभावस्य भेदे मानाभावः। तथा च प्रकृतलक्षणे साध्यपदानुक्तौ साध्यवद्भिन्नगुणादिवृत्तिगगनाद्यभाववति पर्वतादौ धूमादेः सत्त्वेनाव्याप्तिः स्यादतः साध्यपदमित्याहुः।

गुणे गगनाद्यभावे गुणत्वादिसामानाधिकरण्यं न तु द्रव्ये गगनाद्यभावे गुणत्वादिसामानाधिकरण्यमिति प्रतीत्या गगनाद्यभावेऽपि विरुद्धधर्माध्याससम्भवेन गगनाद्यभावोऽपि अधिकरणभेदेन भिन्न एवेति युक्त्या पूर्वोक्तं मथुरानाथसिद्धान्तं दूषयति—तन्मन्दमित्यादिना। गुणे गगनाद्यभावे इत्यस्यायमर्थः—गुणे = गुणावच्छेदेन गगनाद्यभावे गुणत्वादिसामानाधिकरण्यम् (गुणे गगनाद्यभावस्य गुणत्वादेश्च वृत्तितया सामानाधिकरण्यम्) न तु द्रव्ये तत्र गगनाद्यभावस्य सत्त्वेऽपि गुणत्वाभावात् (गुणत्वस्य गुण एव वृत्तित्वात्) न द्रव्यावच्छेदेन गगनाद्यभावे गुणत्वसामानाधिकरण्यमिति सामानाधिकरण्यासामानाधिकरण्यरूपविरुद्धधर्माध्यासः गगनाद्यभावेऽपि स्फुट एवेति।

मू० साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम् ।

दीधितिः

कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह—साध्यवदिति ।

जागदीशी

न च घटत्वघटाकाशसंयोगान्यतरत्वाद्यवच्छिन्नाभाववान् गगनत्वादित्यत्राव्याप्तिः, साध्यवद्भिन्ने घटे वर्तमानस्य गगनघटसंयोगात्मकसाध्याभावस्याप्यधिकरणे गगनादौ गगनत्वादिहेतोः सत्त्वादिति वाच्यम्, अभावाभावस्यातिरिक्ततामते एवैतल्लक्षणकरणादिति भावः । भिन्नत्वे इति । द्रव्यनिष्ठसंयोगाभावतो भिन्नत्वे इत्यर्थः । मानाभावादिति । तथा चात्राव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरिति भावः ।

चन्द्रिका

ननु घटानधिकरणदेशावच्छेदेन हेत्वधिकरणे गगने घटाकाशसंयोगाभावस्य सत्त्वेन सद्धेतुतया घटत्वघटाकाशसंयोगान्यतरत्वावच्छिन्नाभाववान् गगनत्वादित्यादावव्याप्तिः, तथा हि—साध्यवत् ( घटत्वघटाकाशसंयोगान्यतराभाववत् ) भिन्ने = घटे वर्तमानस्य साध्याभावस्य ( घटत्वघटाकाशसंयोगान्यतराभावाभावस्य = तादृशान्यतरमध्यपातिघटाकाशसंयोगरूपस्य ) अधिकरणे गगने ( घटाकाशसंयोगस्याधिकरणं यथा घटस्तथा गगनमपि ) तत्र हेतोः = गगनत्वस्य वृत्तेरिति शङ्कते—न चेति । घटत्वघटाकाशसंयोगान्यतराभावाभावस्य = साध्याभावस्य तादृशान्यतरस्वरूपत्वे तस्य घटाकाशसंयोगरूपत्वमपीत्याशयेनाह—गगनघटेति । अव्याप्तिमुद्धरति- अभावाभावस्येति । एवञ्च घटत्वघटाकाशसंयोगान्यतराभावाभावो न घटत्वघटाकाशसंयोगान्यतरस्वरूपः किन्त्वतिरिक्तोऽभावस्वरूप इति न तस्याधिकरणं गगनं किन्तु घटादिकमेव तत्र गगनत्वहेतोरसत्त्वेन नाव्याप्तिरिति ध्येयम् ।

नन्वधिकरणभेदेनाभावभेदे मानाभावात्—अन्योन्याभावस्याव्याप्यवृत्तितामते संयोगी द्रव्यत्वादित्यव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिः, साध्यवत् ( संयोगवत् )

मू० सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्।

दीधितिः

हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह-सकलेति।

जागदीशी

हेतोरिति। न च साध्यवत्प्रतियोगिकान्योन्याभावस्य केवलान्वयित्वादसम्भव एव वक्तुमुचितो नाव्याप्तिरिति वाच्यम्, वह्निमान् गगनादित्यादाववृत्तिगगनादौ लक्षणसम्भवेन तस्यापि सद्धेतुतायाः

चन्द्रिका

भिन्ने (गुणादौ) वर्तमानस्य साध्याभावस्य=संयोगाभावस्य द्रव्येऽपि सत्त्वात्। एवमनन्तरोक्तस्थलेऽपि तादृशान्यतरात्मकघटाकाशसंयोगरूपस्य साध्याभावस्याधिकरणभेदेन भिन्नत्वे मानाभावात् गगनादावपि साध्याभावाधिकरणत्वस्याक्षततयाऽव्याप्तिरित्याशयेनाह दीधितौ--कर्मादाविति। तत्र कर्मण आदिरिति षष्ठीसमासाश्रये कर्मादिपदं गुणपरम्, द्रव्यभिन्नलक्षकं वान्यथा प्रथमोपस्थितं गुणम्परित्यज्य कर्मानुधावनं निष्प्रयोजनं स्यादिति ध्येयम्। टीकायां भावमाह--तथा चेति। संयोगी द्रव्यत्वादित्यादावित्यर्थः। अव्याप्तिरिति। अधिकरणभेदेनाभावभेदे मानाभावेन गुणादिनिष्ठसंयोगाभावस्य द्रव्येऽपि सत्त्वादिति भावः। साध्यवत्प्रतियोगिकेतिलक्षणान्तरानुसरणे तु संयोगी द्रव्यत्वादित्यादौ नाव्याप्तिः, साध्यवत्प्रतियोगिकान्योन्याभावस्य साध्यवत्यसत्त्वेन गुणादावेव सत्त्वं तत्र द्रव्यत्वरूपहेतोरसत्त्वेनासामानाधिकरण्यसौलभ्यमिति।

अथ साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणवृत्तित्वाभाव इत्येतावन्मात्रस्वरूपत्वे तृतीयलक्षणस्य दोषमाह दीधितौ—हेतोरिति। टीकायां साध्यवदिति। तथा च साध्यवत् (वह्निमत्=पर्वतादि) प्रतियोगिकान्योन्याभावाधिकरणे महानसादौ धूमादेर्हेतोर्वृत्तित्वादव्याप्तिः वह्निमान् धूमादित्यादिनानाधिकरणकसद्धेताविति भावः। केवलान्वयित्वादिति। वह्न्यादिमद्घटोभयभेदस्य साध्यवत्प्रतियोगिकतया सर्वत्र सत्त्वात् केवलान्वयित्वं तादृशान्योन्याभावस्येति हृदयम्।

## जागदीशी

स्वयं वक्ष्यमाणत्वादिति भावः। साध्यपदस्य सिद्धिकर्मतत्तद्व्यक्ति-परतया तत्तद्व्यक्त्यवच्छिन्नान्योन्याभावासामानाधिकरण्यरूपस्य पर्यवसितार्थस्य द्रव्यं पृथिवीत्वादित्यादावेव सम्भवात् गन्धवती पृथिवी-त्वादित्यादावव्याप्तिकथनमित्यपि वदन्ति। ननु सकलस्य साध्यप्रति-योगिकाभावस्याऽधिकरणाऽप्रसिद्ध्या व्यभिचारिण्यतिव्याप्तिवारणाय

## चन्द्रिका

वक्ष्यमाणत्वादिति। सिद्धान्तलक्षणे दीधितौ "स्वरूपसम्बन्धेन गगनादेर्वृत्ति-मत्त्वे तु" इत्यादिनेति बोध्यम्। तथा च कालिकविशेषणतया पदार्थमात्रस्य महा-काले वर्तमानत्वेन घटवान् महाकालत्वादित्यत्र गगनाभावोऽपि प्रतियोगिता-समानाधिकरण एवेत्यव्याप्तिभिया प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमङ्गी-चकार, एवञ्च वह्निमान् गगनादित्यत्र वह्निमद्घटोभयभेदाधिकरणे पर्वतेऽपि गगनस्यासत्त्वेन लक्षणसमन्वयान्नासम्भव इति।

गगनादेरलक्ष्यत्वेऽपि नासम्भव इति वदतां मतमाह—सिद्धिकर्मेति। प्रकृते सिद्धिरनुमितिः तत्कर्म=तद्विषयः ( पर्वते वह्निमनुमिनोमीति प्रतीतौ वह्नेः कर्मत्वं तस्यैव च साध्यत्वमिति साध्यपदं सिद्धिकर्मतत्तद्व्यक्तिपरमिति संगच्छते) तथा च तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभावासामानाधिकरण्यमिति पर्यवसितार्थलक्षणे उभयाभावम्, विशिष्टाभावञ्चादाय द्रव्यं पृथिवीत्वादित्याद्येक-व्यक्तिसाध्यकस्थले न लक्षणाऽसम्भवः तादृशाभावानां सिद्धिकर्मतत्तद्व्यक्तिमात्र-प्रतियोगिताकाभावत्वाभावात्, किन्तु नानाव्यक्तिगन्धादिसाध्यकसद्धेतुस्थले गन्धवती पृथिवीत्वादित्यादौ तद्व्यक्ति ( घटादिनिष्ठगन्धव्यक्ति ) प्रतियोगिकान्योन्याभाववति पटादौ पृथिवीत्वहेतोः सत्त्वेनाव्याप्तिः स्यादेवेति भावः।

ननु सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वमिति लक्षणे साकल्यस्य कुत्रान्वय इति प्रश्ने यदि यत्किञ्चित्साध्याभावमादाय सद्धेतावव्याप्तिवारणाय साध्येऽन्वय इष्यते तदा धूमवान् वह्नेरित्यादौ सकलसाध्या ( यावद्धूमप्रतियोगिका ) भावस्य यत्किञ्चिदधिकरणे ह्रदादौ वह्न्यभावस्य सत्त्वेनातिव्याप्तिरिति तद्वारणाय साकल्यं साध्याभावे विशेषणीयं तथा सति सकलस्य साध्याभावस्याधिकरणाप्रसिद्ध्या-ऽतिव्याप्तिवारणसम्भवेऽपि वह्निमान् धूमादित्यादिप्रसिद्धसद्धेतावव्याप्तिरेवेति

दीधितिः

साकल्यं साध्याभाववति साध्ये च बोध्यम् ।

जागदीशी

यदि साध्याभावस्य विशेषणं साकल्यं तदा वह्निमान् धूमादित्यादिसद्धेतावव्याप्तिः । तत्रापि तत्तत्सपक्षावृत्तित्वावच्छिन्नाभावरूपस्य तत्तद्विपक्षाऽवृत्तित्वावच्छिन्नाभावरूपस्य च साध्यवत्प्रतियोगिकाभावस्तोमस्याधिकरणाऽप्रसिद्धेरत आह—साध्याभाववतीति । तथा च साकल्यं न साध्याभावविशेषणमतो नाऽप्रसिद्धिरिति भावः ।

चन्द्रिका

वृश्चिकभिया पलायमानस्य व्याघ्रमुखे पतनमिव भवेदिति साकल्यं साध्याभाववति साध्ये च विशेषणीयमित्याशयेनाह—नन्वित्यादि । अव्याप्तौ हेतुमाह—तत्रापीति । वह्निमान् धूमादित्यादावपीत्यर्थः । तत्तत्सपक्षेति । सपक्षो निश्चितसाध्यवान् महानसादिः, एवं विपक्षो निश्चितसाध्याभाववान् ह्रदादिः, तथा च सपक्षो महानसञ्चत्वरादिश्च तदवृत्तिर्नास्ति–अर्थात् महानसावृत्तिर्नास्ति, चत्वरावृत्तिर्नास्ति गोष्ठावृत्तिर्नास्तीत्यभावानां साध्य ( वह्नि ) प्रतियोगिकत्वं सुलभं ( चालनीन्यायेन ) महानसीयादिवह्नेः चत्वराद्यवृत्तित्वेन चत्वरावृत्तिपदेन ग्रहीतुं शक्यतया चत्वराद्यवृत्तिर्नास्तीत्यादिनापि वह्निप्रतियोगिकाभावः सुग्रहः । एवं विपक्षो ह्रदादिः सुतरां तदवृत्तिर्वह्निरिति ह्रदावृत्तिपदेन वह्निः सुग्रह इति प्रत्येकं वह्नेः तत्तत्सपक्षावृत्तित्वेन, तत्तद्विपक्षावृत्तित्वेन च तादृशानामसङ्ख्यातानामभावानां संग्रहः स्यादिति भावः । स्तोमस्येति । सकलसाध्याभावसमुदायस्येत्यर्थः । अधिकरणाऽप्रसिद्धेरिति । महानसावृत्तिर्नास्तीत्यभावो लाघवान्महानसत्वरूपः चत्वरावृत्तिर्नास्तीत्यभावश्चत्वरत्वरूपः एवं तत्तदभावानां तत्तद्धर्मस्वरूपत्वेन तेषां धर्माणाञ्च प्रत्येकं स्वस्वाधिकरण एव सत्तया एकाधिकरणाऽप्रसिद्धया वह्निमान् धूमादित्यादावव्याप्तिरिति भावः । इत्थञ्च साध्याभाववति साकल्यविशेषणेन धूमवान् वह्नेरित्यादौ साध्याभाववत्सकलान्तर्गते अयोगोलके वह्नेरभावविरहेण नातिव्याप्तिः । साध्ये चेत्यनेन च वह्निमान् धूमादित्यादौ यत्किञ्चित् ( महानसीयादि ) वह्न्यभावादिकमादाय नाव्याप्तिरिति बोध्यम् ।

नागदीशी

केचित्तु—ननु धूमवान् वह्नेरित्यादिव्यभिचारिण्यतिव्याप्तिः, साध्याभाववद्यत्किञ्चिन्निष्ठाभावप्रतियोगित्वादित्यत आह—साकल्यं साध्याभाववतीति। नन्वेवमपि साध्याभाववन्निखिलान्तर्गते महानसादौ वर्तमानस्याऽभावस्य प्रतियोगित्वं धूमादौ नास्तीत्यव्याप्तितादवस्थ्यमत उक्तं—साध्ये चेति। तथा च सपक्षो महानसादिर्न सकलसाध्याभाववानित्यदोषः।

प्राञ्चस्तु—व्यभिचारिण्यतिव्याप्तिवारणार्थं साध्याभाववति यावत्त्वविशेषणे दत्त एव साध्ये यावत्त्वविशेषणमव्याप्तिवारकतया सार्थकं

चन्द्रिका

यत्किञ्चित् ह्रदादिकं साध्याभावाधिकरणमादाय धूमवान् वह्नेरित्यादिव्यभिचारिण्यतिव्याप्तिस्तद्वारणाय साकल्यं साध्याभाववति, वह्निमान् धूमादित्यादौ च यत्किञ्चित्पर्वतीयादिप्रतियोगिकसाध्याभावमादायाव्याप्तिस्तद्वारणाय साध्ये च साकल्यं विशेषणीयमित्याशयवतां केषाञ्चिन्मतमाह—केचित्त्विति।

नन्वेवमपीति। साकल्यस्य साध्याभाववद्विशेषणत्वेऽपीत्यर्थः। यत्किञ्चित् ( पर्वतीयादि ) साध्यप्रतियोगिकाभाववन्निखिलान्तर्गते महानसादौ वर्तमानस्याभावस्य = घटाद्यभावस्य प्रतियोगित्वं धूमादिसद्धेतौ नास्ति इति। अव्याप्तितादवस्थ्यमिति। साध्याभावविशेषणत्वे इव साध्याभाववद्विशेषणत्वेऽपि साकल्यस्य वह्निमान् धूमादित्यादावव्याप्तिस्तदवस्थेत्याशयः। साकल्यस्य साध्ये विशेषणत्वे यथा न पूर्वोक्ताव्याप्तिस्तदाह—तथा चेति। एवं सति निखिलसाध्याभावाधिकरणं न सपक्षो महानसादिः किन्तु ह्रदादिकमेव तन्निष्ठाभावप्रतियोगित्वं हेतावित्यदोषः नाव्याप्तिरित्यर्थः।

ननु प्रथमोपस्थितत्वात् प्रथमं साध्य एव साकल्यविशेषणत्वमुचितं पश्चाच्च साध्याभाववतीति स्थितौ कथं प्रथमं साध्याभाववत्येव साकल्यस्य विशेषणत्वमुक्तं पश्चाच्च साध्ये इत्याह—प्राञ्चस्त्विति। व्यभिचारिणीति। धूमवान् वह्नेरित्यादावित्यर्थः। धूमाभाववत्—यत्किञ्चिदधिकरणे ह्रदादौ वह्नेरवृत्त्याऽतिव्याप्तिस्तद्वारणार्थं साध्याभाववति साकल्यस्य विशेषणत्वे साध्याभाववत्सकलान्तर्गते अयोगोलके वह्नेः सत्त्वादतिव्याप्तिविरहेऽपि वह्निमान् धूमा-

जागदीशी

भवति, अतः साध्याभाववत्येव साकल्यं प्राक् प्रयोजयति—साकल्यमित्यादिना—इत्येवमवधारयन्ति ।

तन्मन्दम् । साध्याभाववति साकल्यानुक्तावतिव्याप्तिवारकतयैव साध्ये साकल्यविशेषणस्य प्रथमतः सार्थकत्वसम्भवात् । अन्यथा गगनावृत्तिधर्मवान् द्रव्यत्वादित्यादौ पटत्वादिलक्षणतत्तत्साध्यव्यक्त्यभाववद्गुणादिनिष्ठाभावप्रतियोगिनि द्रव्यत्वादावतिप्रसङ्गादिति ध्येयम् । इत्थञ्च प्रथमतः साध्ये साकल्यविशेषणोपादाने गुणत्वादेरपि संग्रहात् तदभाववान्न गुणादिः किन्तु गगनमात्रं तत्र हेतोर्वृत्तित्वान्नातिव्याप्तिः ।

चन्द्रिका

दित्यादौ यत्किञ्चित्पर्वतीयादिवह्नेरभावाधिकरणे महानसादौ धूमस्य सत्त्वेनाव्याप्तिस्तद्वारणाय साध्येऽपि साकल्यस्य विशेषणत्वमावश्यकमित्याशयेनैव (प्रथमं) साध्याभाववति (ततः) साध्ये चेत्युक्तं दीधितिकारेणेति प्राचामाशयः ।

प्रथमं साध्येऽपि साकल्यविशेषणस्य गगनावृत्तिधर्मवान् द्रव्यत्वादित्यादावतिव्याप्तिवारणफलकत्वेन सार्थकत्वसम्भवे प्राचां कथनमयुक्तमित्याह—तन्मन्दमिति । अतिव्याप्तिप्रकारश्चेत्थम्—गगनावृत्तिधर्मो=घटत्वादिः तत्साध्यतायां साध्ये साकल्यानुक्तौ यत्किञ्चित् साध्यं घटत्वं तादृशघटत्वाभाववान्=गुणादिः तत्र द्रव्यत्वहेतोरसत्त्वेन साध्याभाववद्यत्किञ्चिन्निष्ठाभावप्रतियोगित्वस्य द्रव्यत्वे सत्त्वादिति बोध्यम् । साध्ये साकल्यविशेषणे तु सकलसाध्यान्तर्गताः गगनत्वातिरिक्ता सर्वे गुणत्वादयो ग्राह्याः तदभाववान्न गुणादिः किन्तु गगनमात्रं तत्र हेतोः=द्रव्यत्वस्याभावाभावेन नातिव्याप्तिरिति भावः । न चैवमपि यावतां गगनावृत्तिधर्माणां=घटत्वपटत्वादीनां गुणत्वादीनाञ्च समवायेनाभावस्याधिकरणं सामान्यादिकं तत्र द्रव्यत्वस्य=हेतोरभावसत्त्वेन साध्ये साकल्यविशेषणेप्यतिव्याप्तितादवस्थ्यमिति वाच्यम्, स्वरूपेण गगनावृत्तिधर्मस्य साध्यतायामेवात्रातिव्याप्तेर्जगदीशाभिप्रेतत्वेन तेन सम्बन्धेन गगनावृत्तिधर्माणां यावतां गगनभेदादीनामभावाधिकरणत्वस्य गगनमात्रे सत्त्वात् ।

वस्तुतः—साध्ये पश्चात्साकल्यविशेषणोपादानन्तु साध्ये साकल्यं विशेषणीयं साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्य इत्यग्रिमग्रन्थेन सह विकल्पस्फोरणार्थमेव, यदि साकल्यं साध्ये साध्याभाववति च बोध्यमित्युपस्थितक्रमेण

### दीधितिः

## साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको

### जागदीशी

ननु साध्यवत्यपि द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य सकलसाध्यप्रतियोगिकाभावस्य सत्त्वादसम्भवः। किञ्च सकलपदोत्तरसाध्यनाम्ना सकलसाध्यप्रतियोगिताकाऽभाववतोऽनुपस्थापनात्तेन समं सकलपदस्य कर्मधारयोऽप्यनुपपन्न इत्यत आह—साध्याभाव इति।

### चन्द्रिका

लिखेत्तदा साध्याभाववत्साकल्येन सममेव साध्यसामान्याभावस्य विकल्पस्फोरणं प्रतीयेत तच्चानभिप्रेतं दीधितिकृतामिति भावः।

ननु साध्ये साकल्यविशेषणेनैवेष्टसिद्धौ साध्याभावो वेति ग्रन्थारम्भस्य किं प्रयोजनमित्यत आह—ननु साध्यवत्यपीति।

द्वित्वाद्यवच्छिन्नेति। वह्निघटोभयत्वाद्यवच्छिन्नप्रतियोगिताक–वह्निघटोभयं नास्तीत्याकारक–सकलसाध्यप्रतियोगिताकाभाववति = पर्वतादौ धूमाभावासत्त्वेनासम्भवप्रसंग इति।

ननु साध्यतावच्छेदकेतरानवच्छिन्नप्रतियोगिताकसाध्याभावो विवक्षणीयः, निरुक्तवह्निघटोभयत्वावच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकेतरघटत्वाद्यवच्छिन्नतया तादृशोभयत्वा (द्वित्वा) द्यवच्छिन्नप्रतियोगिताकाभावस्य ग्रहीतुमशक्यत्वादेव नासम्भवसम्भावनापीति पुनः साध्याभावो वेति ग्रन्थारम्भो निष्फल एवेत्यत आह—किञ्चेति। तथा च सकलसाध्याभावेत्यादिमूलोक्तलक्षणे सकलपदोत्तरसाध्यपदेन सकलसाध्याभाववतोऽनुपस्थापनादित्यस्याऽयमाशयः—येन पदार्थेन समं यस्य पदार्थस्यान्वयो विवक्षितः परस्परं तयोरेव समासो भवतीति नियमेन—प्रकृते साकल्यस्य साध्याभावव (वह्न्याद्यभावव) ता सममन्वयो विवक्षितः स च साध्याभाववान्न साध्यपदोपस्थाप्यः किन्तु साध्याभाववत्पदोपस्थाप्य एवेति साध्यपदेन सह सकलपदस्य कर्मधारयोऽनुपपन्नः, एवं सति साध्ये साकल्यस्य विशेषणत्वासम्भवात् वह्निमान् धूमादित्यादौ पूर्वोक्तरीत्या पर्वतीयवह्न्याद्यभावमादायाव्याप्तिस्तदवस्थेत्याद्यभिसन्धायाह—तेन सममिति। सकलसाध्याभाववता सममित्यर्थः।

दीधितिः

ग्राह्यः, तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः । न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः ।

जागदीशी

तथा च साध्याभाववत्येव साकल्यं देयं न तु साध्येऽपीति भावः । साध्याभाववति साकल्यदानस्य प्रयोजनमाह—तेनेति । विपक्षैकदेशः कश्चिद्विपक्षः । साध्यनिष्ठसाकल्यस्य साध्यसामान्याभावस्य वा निवेशस्य फलमाह—न वेति । एकव्यक्तिसाध्यके सकलसाध्योक्तावप्यव्याप्तिरग्रे स्थास्यतीत्याशयेन नानेत्युक्तम् । न चैकव्यक्तिसाध्यकस्थलेऽपि द्वित्वाद्यवच्छिन्नाभावमादायासम्भव एव सम्भवति, न त्वव्याप्तिरिति वाच्यम् ।

चन्द्रिका

दीधितौ—साध्यतावच्छेदकेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकेतरानवच्छिन्नसाध्यतावच्छेदधर्मावच्छिन्नप्रतियोगिताकसाध्याभावो ग्राह्य इत्यर्थः । तेन वह्निमान् धूमादित्यादौ समवायेन वह्न्याद्यभावं, पर्वतीयादिवह्न्यभावं, वह्निघटोभयाद्यभावञ्चादाय नाव्याप्तिरिति ध्येयम् ।

फलितार्थमाह—तथा चेति । साध्याभाववति साकल्यविशेषणस्य प्रयोजनमाह दीधितौ—तेनेति । नातिव्याप्तिरिति परेणान्वयः । कश्चिद्विपक्षो ह्रदादिः, एवञ्च साध्याभाववति साकल्यानुक्तौ धूमवान्वह्नेरित्यादौ साध्याभाववद्यत्किञ्चिद्ह्रदादिनिष्ठाभावप्रतियोगित्वं वह्नावित्यतिव्याप्तिः, साकल्योक्तौ तु सकलसाध्याभावाधिकरणान्तर्गतायोगोलकनिष्ठाभावप्रतियोगित्वस्य वह्नौ विरहेणातिव्याप्तिविरह इति ।

साध्ये साकल्यविशेषणस्य, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावप्रवेशस्य वा फलमाह दीधितौ—न वेति । नानेति । वह्निमान् धूमादित्यादावित्यर्थः । अव्याप्तिः = महानसीयादिवह्न्यभावमादाय, नाव्याप्तिरिति योजनीयम् ।

टीकायां -न चैकव्यक्तिसाध्यकस्थलेऽपीति । द्रव्यं पृथिवीत्वादित्यादावित्यर्थः । द्वित्वाद्यवच्छिन्नेति । द्रव्यत्व-जलोभयन्नास्तीत्याकारकाभावमादायेति बोध्यम् । तथा च द्रव्यं पृथिवीत्वादित्यादौ पृथिवीत्वाधिकरणे घटादौ द्रव्यत्वाभावविरहेऽपि ( एकसत्त्वेऽपि द्वयं नास्तीति न्यायेन ) द्रव्यत्वजलोभयाभावसत्त्वेन तत्र पृथिवीत्वाभाव ( हेत्वभाव ) विरहादेवं सर्वत्र सद्धेतावित्यसम्भवसम्भवे अव्याप्ति-

दीधितिः

**अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणाय—अभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् ।**

जागदीशी

व्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणेनैव तद्वारणसम्भवात् । अव्याप्यवृत्तीति । कपिसंयोगी एतत्त्वादित्यादावित्यर्थः । यद्यप्यग्रे हेत्वभावस्यापि प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव निवेशः करणीय इत्यव्याप्यवृत्तिहेतावव्याप्तिः सम्भवति, तथापि यथाश्रुतमूलस्य न तत्रा-

चन्द्रिका

कथनं नोचितमित्याशयः । उत्तरयति—व्यासज्येति । द्वित्वाद्यवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताको व्यासज्यवृत्तिधर्मः तदनवच्छिन्नत्वविशेषणेन एतादृशव्यासज्यवृत्तिधर्मानवच्छिन्न ( साध्यतावच्छेदकेतरानवच्छिन्न ) शुद्धसाध्यनिष्ठप्रतियोगिताकाभावनिवेशेनैव वारणसम्भवात्=असम्भववारणसम्भवात्—तथा हि— द्रव्यं पृथिवीत्वादित्युक्तस्थले द्रव्यत्व-जलोभयन्नास्तीत्यभावो न व्यासज्यवृत्तिधर्मानवच्छिप्रतियोगिताकः किन्तु शुद्धद्रव्यत्वरूपसाध्यप्रतियोगिताकाभावो द्रव्यत्वं नास्तीत्याकारकाभाव एव तथा तस्याधिकरणं न पृथिवीत्वाधिकरणं घटादि किन्तु गुणादिकमेव तत्र हेतोः पृथिवीत्वस्याभावसत्त्वेन नासम्भवः, किन्तु नानाव्यक्तिसाध्यकस्थलेऽव्याप्तिरेव साध्ये साकल्यानुक्ताविति भावः ।

साध्याभावे हेत्वभावे च प्रतियोगिवैयधिकरण्यप्रवेशाय दीधितौ भूमिकामारचयति—अव्याप्यवृत्तीत्यादि । एवञ्च साध्याभावे प्रतियोगिवैयधिकरण्यानुक्तौ—अव्याप्यवृत्तिकपिसंयोगसाध्यकव्याप्यवृत्त्येतद्वृत्तत्वहेतौ सकलसाध्याभाववति मूलावच्छेदेन वृत्ते हेतोः=एतद्वृत्तत्वस्याभावासत्त्वेनाव्याप्तिः स्यादिति भावः ।

ननु दीधितौ व्याप्यवृत्तिसद्धेताविति कथनमयुक्तं साध्याभावे प्रतियोगिवैयधिकरण्यानुक्तौ अव्याप्यवृत्तिसद्धेतावपि कपिसंयोगी कपिविभागादित्यादौ सकलसाध्याभाव ( कपिसंयोगाभाव ) वति वृत्ते वक्ष्यमाणप्रतियोगिवैयधिकरण्यानवच्छिन्नहेत्वभावस्या ( कपिविभागाभावस्या ) सत्त्वेनाऽव्याप्तेः सम्भवादित्याह—यद्यप्यग्रे इति । तथापीति । अव्याप्यवृत्तिसद्धेतावव्याप्तिसम्भवेऽपीत्यर्थः । यथाश्रुतमू-

जागदीशी

व्याप्तिरित्यावेदयितुं व्याप्यवृत्तिहेतूक्तिः । **व्यभिचारिणीति** । एतद्वृत्तत्ववान् कपिसंयोगादित्यादावित्यर्थः । **अभावद्वये-इति** । साध्याभावे हेत्वभावे चेत्यर्थः । अत्र च साध्याभावे प्रतियोगिवैयधिकरण्यं साध्यताघटकसम्बन्धेन प्रतियोगिनो यदनधिकरणं तद्वृत्तित्वं, तेन धूमाद्यभाववतोऽप्ययःपिण्डादेः कालिकसम्बन्धेन धूमादिमत्त्वेऽपि नातिव्याप्तिः ।

हेत्वभावे प्रतियोगिवैयधिकरण्यं तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वघटितं बोध्यम्, तेन अयमात्मा ज्ञानादित्यादौ

चन्द्रिका

लस्य = सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वरूपस्य । न तत्राऽव्याप्तिः = अव्याप्यवृत्तिसद्धेतौ नाव्याप्तिरित्याशयः । एतदुक्तं भवति—यथाश्रुतमूललक्षणे हेत्वभावे प्रतियोगिवैयधिकरण्याऽप्रवेशात् कपिसंयोगी कपिविभागादित्यत्र कपिसंयोगाभावाधिकरणे मूलावच्छेदेन वृक्षे कपिविभागाभावरूपहेत्वभावस्य सत्त्वेनाव्याप्तिविरह इति । एतद्वृक्षत्ववानिति । एवम् हेत्वभावेऽपि प्रतियोगिवैयधिकरण्याऽप्रवेशे एतद्वृक्षत्ववान् कपिसंयोगादित्यसद्धेतुस्थले सकलसाध्याभावा (एतद्वृक्षत्वाभावा) धिकरणे = भूतलादौ कपिसंयोगाभावरूपहेत्वभावस्य सत्त्वेनातिव्याप्तिः, प्रतियोगिव्यधिकरणहेत्वभावनिवेशे तु—एतद्वृक्षत्वाभावाधिकरणे = भूतलादौ प्रतियोगिव्यधिकरणकपिसंयोगाभावस्याऽसत्त्वान्नातिव्याप्तिरिति बोध्यम् ।

नन्वेवमपि धूमवान् वह्नेरित्यादौ कालिकसम्बन्धेनायोगोलकस्य धूमाधिकरणतया तादृशसाध्याभावाधिकरणं गगनादिकमेव तत्र हेत्व ( वह्न्य ) भावस्यापि सत्त्वयाऽतिव्याप्तिः स्यादित्यत आह—साध्यताघटकसम्बन्धेनेति । तथा सति साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावविवक्षया प्रकृते तादृशसंयोगसम्बन्धेन अयोगोलके तादृशसाध्याभावस्य सत्त्वेन तत्र हेत्वभावस्य विरहान्नातिव्याप्तिरित्यावेदयितुमाह—तेनेति । तेन = प्रतियोग्यनधिकरणघटकप्रतियोग्यधिकरतायाः साध्यतावच्छेदकसम्बन्धेन विवक्षणेन ।

एवं हेत्वभावेऽपि प्रतियोगिवैयधिकरण्यं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वघटितं ग्राह्यमित्याह—हेत्वभावे इति । अन्यथा समवायेन आत्म-

दीधितिः

हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधि-

जागदीशी

साध्याभाववतो घटादेर्विषयतया हेत्वभावप्रतियोगिसत्त्वेऽपि नाऽव्याप्तिः। हेत्वभ वोऽपीति। अपिना साध्याभावसंग्रहः, तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः। यद्यपि साध्याभावोऽपीत्येवं क्रमेण वक्तु-

चन्द्रिका

त्वसाध्यके तेनैव सम्बन्धेन ज्ञानहेतुके आत्मात्मा ज्ञानादित्यत्र साध्याभाव (आत्मत्वाभाव) वति घटादौ विषयतासम्बन्धेन ज्ञानस्य सत्तया (विषयतासम्बन्धेन पदार्थमात्रे ज्ञानस्य सत्त्वं, विषयितासम्बन्धेन च ज्ञाने पदार्थमात्रस्य सत्त्वमिति) तत्र ज्ञानहेतोस्तादृशाभावविरहादव्याप्तिः, प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वघटितप्रतियोगिवैयधिकरण्यावच्छिन्नहेत्वभावप्रवेशे तु ज्ञानाभावीयप्रतियोगितावच्छेदकसमवायसम्बन्धेन प्रतियोगिव्यधिकरणज्ञानाभावस्य साध्याभावाधिकरणे घटादौ विद्यमानतया लक्षणसमन्वयो भवतीति भावः।

साध्याभावसंग्रह इति। दीधितौ हेत्वभावोऽपीत्यपिना साध्याभावोऽपि साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो ग्राह्य इत्यर्थः।

साध्याभावे प्रतियोगितावच्छेदकेत्यादिनिवेशस्य फलमाह—तेनेति। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभावाऽप्रवेशे विशिष्टसत्तावान् जातेरित्यादौ विशिष्टशुद्धसत्तयोरैक्येन साध्याभावस्य विशिष्टसत्ताभावस्य गुणादौ विशिष्टसत्तात्मकसत्तारूपप्रतियोगिसमानाधिकरणत्वात् सामान्यादावेव प्रतियोगिव्यधिकरणविशिष्टसत्ताभावो भवितुमर्हति तत्र हेत्व (जात्य) भावस्य प्रतियोगिव्यधिकरणस्य सत्त्वेनातिव्याप्तिः। तथा निवेशे तु विशिष्टसत्तात्वावच्छिन्नप्रतियोगिव्यधिकरणविशिष्टसत्ताभावस्य गुणादौ सत्त्वेन तत्र प्रतियोगिव्यधिकरणजातिरूपहेत्वभावस्यासत्त्वान्नातिव्याप्तिरिति।

यद्यपीति। दीधितौ साध्याभावोऽपीत्युपादानेऽग्रे तत्प्रतियोगित्वञ्चेति तत्पदेन विवक्षितहेत्वभावग्रहणाऽभाव इति। ननु तत्प्रतियोगित्वञ्चेत्यनुक्त्वा हेत्वभावप्रतियो-

### दीधितिः

करणः, तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यम् ।

### जागदीशी

मुचितम्, अपिशब्दादेव हेत्वभावस्य लाभसम्भवात्, तथापि 'तत्प्रतियोगित्वञ्चेति' अग्रिमतत्पदेनानिर्दिष्टहेत्वभावस्य परामर्शाऽसम्भवात्, हेत्वभावप्रतियोगित्वञ्च इत्यभिधाने च ग्रन्थगौरवादित्थमभिधानम् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगीति । प्रतियोगिपदं प्रतियोगितावच्छेदकताघटकसम्बन्धेनावच्छेदकस्य वैशिष्ट्यलाभाय, तेन ह्रदादौ कालिकादिसम्बन्धेन धूमत्वावच्छिन्नस्य काष्ठादेः संयोगसम्बन्धेन सत्त्वेऽपि नाव्याप्तिः ।

### चन्द्रिका

गित्वमित्येवोच्यताम् न कोऽपि दोष इत्यत आह—हेत्वभावेति । ग्रन्थगौरवादिति । तथा सति हेत्वभावप्रतियोगित्वञ्चेत्यस्य तत्पदापेक्षयाऽधिकतराक्षरघटितत्वेन गौरवं स्यादित्याशयः । इत्थमभिधानम् = हेत्वभावोऽपीति कथनम् ।

ननु दीधितौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरण इत्यत्र प्रतियोगिपदं व्यर्थं, तदनुपादानेऽपि प्रतियोगितावच्छेदकावच्छिन्नत्वस्य प्रतियोगिन्येव सत्त्वात् । तथा च प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणो ग्राह्य इत्येतावदेव युक्तमित्यत आह—प्रतियोगिपदमिति । इत्थञ्च प्रतियोगिपदं प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकेनावच्छिन्नं यत्प्रतियोगि तत्परम् । अवच्छेदकस्य = हेत्वभावप्रतियोगितावच्छेदकस्य । वैशिष्ट्यलाभाय = प्रतियोगिनि सम्बन्धलाभाय ।

तादृशविवक्षायाः फलमाह—तेनेति । प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यस्य विवक्षणेन वह्निमान् धूमादित्यादौ साध्याभावाधिकरणे ह्रदादौ कालिकादिसम्बन्धेन धूमत्वविशिष्टकाष्ठादेः हेतुतावच्छेदकसंयोगसम्बन्धेन वृत्तित्वेऽपि विवक्षितप्रतियोगितावच्छेदकतावच्छेदकसमवायसम्बन्धेन धूमत्वविशिष्टधूमस्य तत्रासत्त्वात्तत्र साध्याभावाधिकरणे = ह्रदादौ प्रतियोगिव्यधिकरणधूमाभावस्य सत्त्वेनाव्याप्तिविरहात्प्रतियोगिपदं सार्थकमिति भावः ।

जागदीशी

तत्प्रतियोगित्वं = हेत्वभावप्रतियोगित्वम्। हेतुतावच्छेदकरूपेणेति। हेतुतावच्छेदकसम्बन्धेनेत्यपि बोध्यम्। तेनात्मभिन्नं द्रव्यत्वादित्यादौ साध्याभाववत्यात्मनि वर्तमानस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्य कालिकादिसम्बन्धेन प्रतियोगित्वेऽपि द्रव्यत्वस्य नातिव्याप्तिः। न च हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्योक्त्यैवातिव्याप्तिवारणसम्भवात्, हेतुतावच्छेदकसम्बन्धेन प्रतियोगित्वविवक्षा व्यर्थेति वाच्यम्।

तथा सति निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ निर्वह्नित्वभेदमा-

चन्द्रिका

तेनेति। हेत्वभावप्रतियोगितायाः हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षणेनेत्यर्थः। आत्मभिन्नं द्रव्यत्वादित्यस्य—द्रव्यत्वस्यात्मन्यपि सत्त्वेन तत्रात्मभेदरूपसाध्यस्य सत्त्वाद्व्यभिचारितया साध्या (आत्मभेदा) भावाधिकरणे आत्मनि कालिकसम्बन्धेन प्रतियोगिव्यधिकरणद्रव्यत्वाभावसत्त्वेऽपि नातिव्याप्तिः, विवक्षितहेतुतावच्छेदकसमवायसम्बन्धेन हेतोः (द्रव्यत्वस्य) तत्र - साध्याभावाधिकरणे = आत्मनि सत्त्वात्प्रतियोगिव्यधिकरणहेत्वभावविरहादिति बोध्यम्।

अथायमात्मा ज्ञानादित्यत्राव्याप्तिवारणाय प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणहेत्वभावः पूर्वं निवेशितस्तथा सति—आत्मभिन्नं द्रव्यत्वादित्यादावुक्तप्रकारेणातिव्याप्तिस्तद्वारणाय हेत्वभावीयप्रतियोगिता हेतुतावच्छेदकसम्बन्धावच्छिन्ना निविष्टा तदपेक्षयोभयत्र दोषवारणाय हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं निवेशनीयमेवञ्च प्रोक्तस्थले साध्याभाववत्यात्मभिन्ने = घटादौ हेतुतावच्छेदकसमवायसम्बन्धेन प्रतियोगिव्यधिकरणज्ञानाभावसत्त्वात्, आत्मभिन्नं द्रव्यत्वादित्यत्रापि साध्याभाववत्यात्मनि हेतुतावच्छेदकसमवायसम्बन्धेन प्रतियोगिव्यधिकरणहेत्व (द्रव्यत्वा) भावस्य चासत्त्वऽव्याप्त्यतिव्याप्त्योः विरहाद्व्यर्थमेव पुनः हेतुतावच्छेदकसम्बन्धेन हेत्वभावीयप्रतियोगित्वविवक्षणमित्याशयेनाह—न चेति।

समाधत्ते—तथा सतीति। हेतुतावच्छेदकसम्बन्धेन हेत्वभावीयप्रतियोगि-

### दीधितिः

## तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः ।

### जागदीशी

दायैव लक्षणसम्भवे निर्धूमत्वव्याप्येत्याद्युत्तरग्रन्थवक्ष्यमाणाव्याप्त्यलग्नतापत्तेरिति ध्येयम् । वस्तुतो निर्वह्नित्वस्य व्याप्यवृत्तितया तद्धेतुस्थले हेत्वभावे प्रतियोगिव्यधिकरणत्वन्न देयं व्यर्थत्वात्, परन्तु हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं वाच्यम्, अतो नाग्रिमग्रन्थाऽसङ्गतिरिति ध्येयम् । हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यविवक्षायाः फलमाह—तेन द्रव्यत्वादाविति ।

### चन्द्रिका

त्वविवक्षामुपेक्ष्य हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य निवेशे सतीत्यर्थः । अयं भावः—हेत्वभावीयप्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशे सत्येव निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यत्र निर्धूमत्व ( धूमाभाव ) व्याप्याभाववति पर्वतादौ हेतुतावच्छेदकस्वरूपसम्बन्धेन हेत्व (निर्वह्नित्व = वह्न्यभावा) भावस्य महानसीयादिवह्निस्वरूपस्यावर्तमानतयाऽव्याप्तिमेव चतुर्थलक्षणम्परित्यज्य पञ्चमलक्षणानुसरणे बीजं वक्ष्यति दीधितिकारः, यदि हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं विवक्ष्येत तदा निर्धूमत्वव्याप्याभाववति पर्वतादौ हेतुतावच्छेदकस्वरूपसम्बन्धेन निर्वह्नित्व = वह्न्यभावरूपप्रतियोगिनोऽसत्त्वेन प्रतियोगिव्यधिकरण ( निर्वह्नित्वं नेत्याकारक) निर्वह्नित्वभेदस्वरूपहेत्वभावस्य सत्त्वेनाव्याप्तिविरहाद्वक्ष्यमाणाव्याप्त्यलग्नतापत्तिरिति ।

निर्वह्नित्व ( वह्न्यभावरूप ) हेतोः व्याप्यवृत्तितया तत्र प्रयोजनाभावेन प्रतियोगिवैयधिकरण्यमेव न निवेश्यमित्यगत्या हेतुतावच्छेदकसम्बन्धेनैव प्रतियोगिता विवक्षणीयेति वक्ष्यमाणाव्याप्तिसम्भवेन न पूर्वापरग्रन्थविरोधसम्भावनेत्याशयेनाह—वस्तुत इति । तथा च निर्धूमत्वव्याप्याभाववति पर्वते हेतुतावच्छेदकस्वरूपसम्बन्धेन निर्वह्नित्वरूपहेतोरभावस्य महानसीयादिवह्निस्वरूपस्यासत्त्वेनाऽव्याप्तिः सङ्गतेति बोध्यम् ।

दीधितिः

न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्तादावतिप्रसङ्गः ।

जागदीशी

अन्यथा साध्याभाववति गुणादौ विशिष्टसत्त्वाभावस्य सत्तारूपप्रतियोगिसमानाधिकरणत्वादव्याप्तिरेव स्यादिति भावः । अत्र तु द्रव्यत्वस्य साध्यतायां साकल्याऽप्रसिद्ध्याऽव्याप्तेरुक्तविवक्षयाप्यप्रतीकारादादिपदम् । तेन गुणवत्त्वादिसाध्यस्योपग्रहः, द्रव्येतरासमवेतमात्रं वा प्रकृते द्रव्यत्वमिति ध्येयम् । हेतुतावच्छेदकरूपावच्छिन्नप्रतियोगित्वविवक्षायाः फलमाह— न वेति । सत्तादाविति । द्रव्यत्वादौ साध्ये इत्यनुषज्यते ।

चन्द्रिका

अन्यथेति । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यस्य हेत्वभावेऽविवक्षणे इत्यर्थः । एवं सति द्रव्यं विशिष्टसत्त्वादित्यादौ साध्याभाव (द्रव्यत्वाभाव) वति गुणादौ हेत्व ( विशिष्टसत्ता ) भावस्य सत्तारूपप्रतियोगिसमानाधिकरणत्वात् प्रतियोगिव्यधिकरणहेत्वभावस्य विरहेणाऽव्याप्तिः स्यात्तथा निवेशे तु हेत्वभावस्य गुणादौ विशिष्टसत्तात्वावच्छिन्नप्रतियोगिव्यधिकरणतायाः सत्त्वेन लक्षणसमन्वयादिति ।

दीधितौ द्रव्यत्वादौ साध्ये इत्यत्रादिपदं, तस्य व्यावृत्तिमाह— अत्र त्विति । तेनेति । आदिपदात् गुणवत्त्वादिसाध्यपरिग्रहे गुणवत्त्वस्य सकलगुणस्वरूपत्वेन चतुर्विंशतिरूपतया न साकल्याऽप्रसिद्धिनिबन्धनो दोष इति बोध्यम् । गुणाधिकरणत्वरूपस्य गुणवत्त्वस्याधिकरणभेदेनाप्यभिन्नत्वे साकल्याऽप्रसिद्धिस्तदवस्थेत्यत आह—द्रव्येतरेति । द्रव्यभिन्ननिरूपितसमवायावच्छिन्नवृत्तित्वाभाववन्मात्रमित्यर्थः । तथा च द्रव्येतरासमवेतमात्रस्य सकलगुणकर्मद्रव्यत्वादिरूपस्य द्रव्यपदग्राह्यत्वे तस्यानेकरूपत्वेन साध्यनिष्ठसाकल्यस्य प्रसिद्धिरिति भावः । दीधितौ तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यमिति विवक्षायाः फलमाह— न वेति । द्रव्यं सत्त्वादित्यत्र नातिव्याप्तिरिति भावः । हेत्वभावप्रतियोगिताया हेतुतावच्छेदकरूपेणाऽनिवेशे साध्या ( द्रव्यत्वा ) भाववति गुणादौ विशिष्टसत्त्वाभावस्य तादृशस्य वर्तमानतया तत्प्रतियोगित्वस्य सत्तायामपि सत्त्वादतिव्याप्तिः स्यादेवेति भावः ।

दीधितिः

## यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वा-

जागदीशी

यत्रैकव्यक्तिकमिति । तथा च द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः सकल-साध्याऽप्रसिद्धेरित्यर्थः । ननु इतोप्यस्वरसात् साध्यसामान्याभावस्यैव निविष्टत्वात् साध्ये साकल्यं न देयमेवेत्यत आह—विपक्ष वेति । विपक्षः साध्याभाववान् , एकव्यक्तिक इत्यनुषज्यते । तथा च यत्रैकव्य-क्तिरेव साध्याभाववती तत्र तद्घटावृत्तिधर्मवान् तद्घटान्यत्वादित्या-दावव्याप्तिः, साध्याभाववत्तद्घटस्य साकल्याऽप्रसिद्धेरिति भावः ।

चन्द्रिका

सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वरूपलक्षणस्य—द्रव्यं पृथिवीत्वादि-त्यादौ द्रव्यत्वस्यैकव्यक्तिकतया सकलसाध्याऽप्रसिद्ध्याऽव्याप्तिः स्यादित्यत आह—इतोऽपीति । अपिना ( एकत्र विशेषणतयाऽन्वितस्यान्यत्र विशेषणायोगादिति ) नियमेन साध्याभाववत्यन्वितस्य साकल्यस्य साध्येऽन्वयासम्भवरूपो दोषः समुच्चितः । अस्वरसात्=एकव्यक्तिसाध्यकस्थलेऽव्याप्तिरूपदोषात् । साध्यसामान्याभावस्यैव= साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्यैव । निविष्टत्वात् = निवेशात् , लक्षणघटकत्वेनेति शेषः ।

एकव्यक्तिकमिति । यत्रैकव्यक्तिको विपक्ष इति बोध्यम् । तद्घटावृत्तिधर्म-वानित्यत्र तद्घटेऽवर्तमानधर्ममात्रस्य=पटत्वादेरभाववान् तद्घट एवेति भवति एकव्यक्तिकविपक्ष इति बोध्यम् । साकल्याऽप्रसिद्धेरिति । साध्ये साकल्यादानेऽपि साध्याभाववतः तद्घटस्यैकव्यक्तित्वेन साध्याभाववत्साकल्याऽप्रसिद्ध्या तद्घटाऽ-वृत्तिधर्मवान् तद्घटान्यत्वादित्यत्राव्याप्तिस्तदवस्थेति भावः ।

नन्वेकव्यक्तिविपक्षस्थले दोषसम्भवे निर्धूमत्वादिव्याप्येत्यादिस्थलान्तरानु-धावनं किमर्थमिति चेत्तत्राह साध्याभाववदिति । एवञ्च साध्याभाववन्निष्ठाऽ-न्योन्याभावप्रतियोगितानवच्छेदकीभूताभावप्रतियोगित्वस्य लक्षणत्वे तद्घटावृत्तिधर्म-वान् तद्घटान्यत्वादित्यत्र नाव्याप्तिस्तथा हि—साध्याभाववति तद्घटे वर्तमानोऽ-न्योन्याभावः तद्घटान्यत्वाभाववान्नेत्याकारकाभावो न भवेत्तस्य तद्घटान्यत्वस्वरूपस्य

दीधितिः

दिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिस्तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षाऽवृत्तित्वादत आह—

जागदीशी

साध्याभाववन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकीभूताभावप्रतियोगित्वं वक्तव्यमतो दोषान्तरमाह—निर्धूमेति—कश्चित् ननु साध्यादिभेदेन व्याप्तेर्भेदात् यत्रैकव्यक्तिरेव विपक्षस्तत्रत्यलक्षणे साध्याभाववति साकल्यविशेषणं न देयमिति दोषान्तरमाह—निर्धूमत्वाद्व्याप्य इति। निर्धूमत्वस्य साध्यत्वे यत्रैकव्यक्तिकमित्यनेनैव गतार्थता स्यादतो व्याप्यपर्यन्तम्, निर्धूमत्वव्याप्यस्यापि स्नेहादेः स्नेहत्वादिना साध्यत्वे वह्न्यभावस्य व्यभिचारित्वादसंग्रहो न दोष इत्यत उक्तं—तत्त्वेन साध्ये इति। निर्धूमत्वव्याप्यत्वेन साध्ये इत्यर्थः। प्रत्येकमिति। हेत्वभाव-

चन्द्रिका

तस्मिन्नसम्भवात् किन्तु पटान्यत्वाभाववान्नेत्याद्याकारकाभाव एव ग्रहीतुं शक्यः तत्प्रतियोगितानवच्छेदकीभूताभाव (तद्घटान्यत्वाभाव) प्रतियोगित्वं तद्घटान्यत्वे वर्तत इति लक्षणसमन्वयसौलभ्यात्स्थलान्तरेऽव्याप्तिमाह—निर्धूमेति। यत्रैकव्यक्तिरेव विपक्षस्तत्रत्यलक्षणे साध्याभाववति साकल्यं न देयं साध्यसाधनभेदेन व्याप्तेर्भेदात्तथा च नोक्तदोष इति कस्यचिन्मतानुसारं स्थलान्तरानुसरणे बीजमाह—कश्चिदित्यादिना। निर्धूमत्वस्य धूमत्वावच्छिन्नप्रतियोगिताकधूमाभावस्वरूपतया तस्यैकव्यक्तित्वेन यत्रैकव्यक्तिकमित्यनेनैव गतार्थतासम्भवं व्याप्यपर्यन्तानुधावने बीजमाह—निर्धूमत्वस्येति। एवञ्च निर्धूमत्व (धूमाभाव) व्याप्यस्नेह-जलत्व-मीन-सैवालादीनामनेकतया यत्रैकव्यक्तिकमित्यनेन गतार्थता न सम्भवतीत्याशयः।

स्नेहादेरिति। दीधितौ—तत्त्वेन साध्ये = अर्थान्निर्धूमत्वव्याप्यत्वेन साध्ये। तदनुक्तौ निर्धूमत्वव्याप्यस्नेहादेः स्नेहत्वादिना साध्यत्वे निर्वह्नित्वस्य हेतोः स्नेहाभाववति भूतलादौ वृत्तित्वेन व्यभिचारितया तत्र लक्षणानागमनमिष्टापत्तिरेव

जागदीशी

स्य = महानसीयादिवह्नेः साध्याभाववत्सकलान्तर्गतपर्वताद्यवृत्तित्वाद्‌व्याप्तिरिति भावः । निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नयद्रूपावच्छिन्नाभावत्वं तद्रूपवत्त्वं व्याप्तिरित्युक्तौ तु न दोष इति ध्येयम् ।

चन्द्रिका

स्यात् । निर्धूमत्वव्याप्यत्वेन साध्यत्वे निर्वह्नित्वरूपहेतोरधिकरणे = घटादौ निर्धूमत्वव्याप्यस्य यस्य कस्यचित् घटत्वादेः सत्त्वेन सद्धेतुत्वमिति तत्राऽव्याप्तिभिया लक्षणपरित्यागः समुचित इति ग्रन्थकृतामाशयः । अव्याप्तिरिति । हेत्वभावस्य = निर्वह्नित्वाभावरूपस्य महानसीयादिवह्नेः साध्याभाव ( निर्धूमत्वव्याप्याभाव = धूमाभावव्याप्याभाव = पर्वतीयधूमादि ) वति पर्वतादाववृत्तेरव्याप्तिरिति बोध्यम् ।

प्र० निरुक्तेत्यस्य साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । द्वि० निरुक्तेत्यस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । तथा च–साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तिसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं यत् प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नयद्रूपा (हेतुतावच्छेदका) वच्छिन्नप्रतियोगिताका (हेत्व) भावत्वं तद्रूप- (हेतुतावच्छेदक) वत्त्वं व्याप्तिरिति संकलितलक्षणार्थः । एवञ्च वह्निमान्धूमादित्यादौ तादृशसाध्याभाववति जलह्रदादौ धूमत्वावच्छिन्नाभावस्य सत्त्वेन धूमत्वावच्छिन्नाभावत्वस्य साध्याभावव्यापकतावच्छेदकतया यद्रूपपदेन धूमत्वस्य धर्तुं शक्यतया तादृशधूमत्ववत्त्वस्य धूमे सत्त्वेन लक्षणसमन्वयः । धूमवान् वह्नेरित्यादिव्यभिचारिणि तादृशधूमाभाववत्ययोगोलके निरुक्तवह्नित्वावच्छिन्नाभावस्यासत्त्वेन वह्नित्वावच्छिन्नाभावत्वस्य धूमाभावव्यापकतानवच्छेदकतया यद्रूपपदेन वह्नित्वस्य धर्तुमशक्यत्वान्नातिव्याप्तिः । एवं प्रकृते— ह्रदो निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यत्रापि साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदका ( निर्धूमत्वव्याप्यत्वा ) वच्छिन्नानधिकरणवृत्तिसाध्यतावच्छेदका ( निर्धूमत्वव्याप्यत्वा ) वच्छिन्नप्रतियोगिताकाभावव्यापकतावच्छेदकं निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नहेतुतावच्छेदकस्वरूपसम्बन्धावच्छिन्नयद्रूपावच्छिन्नाभावत्वं ( निर्वह्नित्वत्वावच्छिन्नाभावत्वं = वह्नित्वं ) तद्रूप = निर्वह्नित्वत्वरूपवत्त्वं निर्वह्नित्वे हेताविति लक्षणसमन्वयः । निर्धूमत्वव्याप्याभाववति पर्वतादौ निर्वह्नित्वाभावो वर्तत इति भावः ।

मू० साध्यवदन्याऽवृत्तित्वं वा केवलान्वयिन्य-भावात् ।

दीधितिः

साध्यवदिति । अत्राऽन्योन्याभावस्य साध्यवत्त्वावच्छिन्न-

जागदीशी

ननु साध्यवत्प्रतियोगिकान्यत्वस्य धूमादिमति सत्त्वादव्याप्तिरत आह अत्रेति । तथा च साध्यवत्पदेन निरूढलक्षणयोपस्थापितस्य साध्यताव-

चन्द्रिका

साध्यवदन्याऽवृत्तित्वमिति । ननु निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यत्र साध्यवतः ( जलादेः ) अन्यस्मिन् = भिन्ने पर्वतादौ निर्वह्नित्वस्य = वह्न्यभावस्यावृत्तितया लक्षणसमन्वयेऽपि वह्निमान् धूमादित्यादिप्रसिद्धस्थल एव साध्यवदन्य-महानसादौ धूमरूपहेतोः सत्त्वेनाव्याप्तिश्रौव्यमित्यत आह — अत्रेतीति । निरूढलक्षणयेति । अनादिकालतात्पर्यवती लक्षणा निरूढलक्षणापदेनोच्यते, तथा च साध्यवत्पदस्य निरूढलक्षणया साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकेतरानवच्छिन्नावच्छेदकतानिरूपकप्रतियोगिताकपरतया साध्यवति महानसादौ साध्यवदन्यत्वस्यासम्भवेन नाव्याप्तिरिति भावः । न च शक्यसम्बन्धरूपा लक्षणा पद एव स्यान्न तु प्रकृतिप्रत्ययात्मके साध्यवदिति वाक्ये—इति वाच्यम्, मतुप्प्रत्ययस्यैव साध्यवत्त्वावच्छिन्नप्रतियोगिताके निरूढलक्षणया साध्यपदस्य तात्पर्यग्राहकत्वेन, मतुप्प्रत्ययस्य निरर्थकत्ववादिनां मते तादृशसमुदायस्य वाक्यत्वासम्भवेन, परमते वाक्येऽपि लक्षणासम्भवेन चादोषात् । एवञ्च तादात्म्यसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नतदितरानवच्छिन्नप्रतियोगिताको यो भेदस्तदधिकरणनिरूपितवृत्तित्वाभावस्य लक्षणस्वरूपत्वे वह्निमान् धूमादित्यादौ तादात्म्यसम्बन्धावच्छिन्नवह्निमत्त्वावच्छिन्नप्रतियोगिताको यो वह्निमद्भेदस्तदधिकरण ( जलह्रदादि ) निरूपितवृत्तित्वाभावस्य धूमहेतौ सत्त्वेन लक्षणसमन्वयः ।

जागदीशी

च्छेदकविशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकस्यान्यपदार्थैकदेशेऽन्यत्वे तादात्म्येनान्वयात् साध्यवति च साध्यवत्त्वावच्छिन्नभेदाऽसत्त्वान्नाऽव्याप्तिः, गुरुधर्मस्यावच्छेदकत्वोपगमाच्च द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्वत्वविशिष्टद्रव्यत्ववत्त्वावच्छिन्नभेदाऽप्रसिद्धया नाव्याप्तिरिति भावः।

यद्धर्मविशिष्टबोधकपदसमभिव्याहृतेनान्यादिपदेनोपस्थापितेऽन्यत्वादौ, तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैव तादात्म्येनान्वयो न तु

चन्द्रिका

अथ समवायेन वह्निमतो भेदमादाय, महानसीयवह्निमद्भेदमादाय, वह्निमद्घटोभयभेदमादाय चाव्याप्तिवारणाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकपदेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकेतरानवच्छिन्नावच्छेदकताकप्रतियोगिताकस्यैव ग्राह्यत्वेऽपि गौः सास्नावत्त्वादित्यादौ स्वरूपतो गोत्वापेक्षया गवेतरासमवेतत्वे सति सकलगोसमवेतत्वरूपगोत्वत्वविशिष्टगोत्वस्य गुरुधर्मतया प्रतियोगितानवच्छेदकत्वेनाव्याप्तिः स्यादित्यत आह—गुरुधर्मस्येति। तथा च गौः सास्नावत्त्वादित्यादौ तादृशगोत्वत्वविशिष्टगोत्वस्य गुरुधर्मस्याप्यवच्छेदकत्वसम्भवेन नाव्याप्तिरित्याशयेनाह— द्रव्यं पृथिवीत्वादित्यादाविति। इत्थञ्च द्रव्यं पृथिवीत्वादित्यादावपि द्रव्यत्वत्वस्या (गुरुधर्मस्या) वच्छेदकत्वोपगमाद् द्रव्येतरासमवेतत्वे सति सकलद्रव्यसमवेतत्वरूपद्रव्यत्वत्वविशिष्टद्रव्यत्ववत्त्वावच्छिन्नप्रतियोगितायाः प्रसिद्धतया साध्यवत्त्वावच्छिन्न ( द्रव्यत्ववत्त्वावच्छिन्न ) प्रतियोगिताकभेदवति गुणादौ पृथिवीत्वस्यावृत्त्या नाव्याप्तिदोष इति भावः।

ननु गुरुधर्मस्यावच्छेदकत्वस्वीकारापेक्षया लाघवात् तद्धर्माश्रयप्रतियोगिताकत्वेनैवान्यपदार्थैकदेशेऽन्यत्वादावन्वयोऽस्तु किं तद्धर्मावच्छिन्नप्रतियोगिताकत्वेनेत्यत आह यद्धर्मविशिष्टेति। यद्धर्मः = साध्यवत्त्वरूपो धर्मः, तद्विशिष्टबोधकं = साध्यवत्पदम्, तेन समभिव्याहृतं सहोच्चारितमन्यादिपदं तदुपस्थापितेऽन्यत्वादावित्यर्थः। तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैव = साध्यवत्त्वादिधर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैव, तादात्म्येनान्वयो न तु तद्धर्माश्रययत्किञ्चित्प्रतियोगिताकत्वेनेति तत्त्वम्। तथा च तादृशव्युत्पत्तिस्वीकारेऽन्यपदोपस्थापितेऽन्यत्वादौ तद्धर्मावच्छिन्नप्रतियोगिताकत्व-

दीधितिः

प्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम् । नहि भवति नीलो घटो घटान्य इति ॥

॥ इति श्रीरघुनाथशिरोमणिकृता व्याप्तिपञ्चक-
व्याख्या समाप्ता ॥

——

जागदीशी

तद्धर्माश्रयप्रतियोगिताकत्वेनेत्यत्र व्युत्पत्तौ प्राचां सम्वादमाह—नहीति।

तथा च तादृशव्युत्पत्त्यस्वीकारे नीलघटे घटप्रतियोगिकभेदसत्त्वात् नीलघटो घटान्य इत्यपि व्यवहारः स्यादिति भावः।

चन्द्रिका

प्रकारेण तादात्म्येनान्वयो न तु तद्धर्माश्रयप्रतियोगिताकत्वेनेति व्युत्पत्तौ प्राचीनानां सम्मतिमाह - नहीतीति । तथा च यथा घटान्य इत्यत्र घटपदार्थस्य घटत्वावच्छिन्नप्रतियोगिताकत्वप्रकारेणैवान्यपदार्थैकदेशे भेदे अन्वयो न तु घटत्वाश्रयप्रतियोगिताकत्वप्रकारेण तथा साध्यवदन्य इत्यत्रापि साध्यवत्पदार्थस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वेनैव तत्समभिव्याहृतान्यपदार्थैकदेशे भेदेऽन्वयो न तु साध्यवत्त्वाश्रयप्रतियोगिताकत्वेनेति भावः।

तादृशव्युत्पत्त्यस्वीकारे = तद्धर्मावच्छिन्नप्रतियोगिताकत्वेनैवान्वयो न तु तद्धर्माश्रयप्रतियोगिताकत्वेनेति व्युत्पत्त्यस्वीकारे। नीलघटे घटत्वाश्रय (यत्किञ्चित्) पीतघटप्रतियोगिकभेदसत्त्वेन नीलघटो घटान्य इति व्यवहारस्य दुर्वारतापत्तेरिति भावः।

### जागदीशी

अत्र च द्रव्यं घटान्यदित्याद्यप्रयोगात् यन्निष्ठप्रतियोगिताकत्वेन भेदोऽन्यादिशब्देन बोध्यते तदवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वम् ।

तत एव घटो घटान्य इत्यस्य वारणासम्भवान्नीलघटत्वस्य धर्मितावच्छेदकत्वानुधावनमिति मन्तव्यम् । नीलो घटो घटान्य इत्येव सम्यक् पाठः, तथैव प्रकृतोपयोगित्वसङ्गतेः, घटादन्य इति पाठस्तु साध्यवदन्य इत्यत्र पञ्चमीसमासे लुप्तविभक्तिस्मारितप्रतियोगित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वस्य संसर्गमर्यादया भानमादृत्य कथञ्चित्सङ्गमनीयः ।

### चन्द्रिका

अथ द्रव्यं घटान्यदित्यादिप्रयोगवारणाय यत् ( घटादि ) निष्ठप्रतियोगिताकत्वेन भेदोऽन्यादिपदेन बोध्यते तदवृत्ति ( घटाद्यवृत्ति ) धर्मस्यैवानुयोगितावच्छेदकत्वमिति स्वीकारेण घटो घटान्य इत्यस्य वारणासम्भवान्नीलघटत्वस्य धर्मितावच्छेदकत्वानुसरणमित्याशयेनाह—अत्र चेत्यादि । अनुयोगितावच्छेदकत्वम्=उक्तभेदस्याधिकरणतावच्छेदकत्वम् । धर्मितेति—विशेष्यतावच्छेदकत्वेत्यर्थः । एवं च यन्निष्ठेत्यादि नयमादरे घटो घटान्य इत्यस्य वारणेऽपि नीलघटत्वस्य घटसामान्याऽवृत्तितया यन्निष्ठेत्यादिना तादृशव्यवहारस्य वारणं न सम्भवतीति भावः ।

इत्येवेत्यस्य पञ्चमीविभक्तिक 'घटादन्य' इत्यपेक्षया घटान्य इति समस्तपाठ एव सम्यगित्यर्थः । तथैव प्रकृतेति । प्रकृते साध्यवत्पदस्य लक्षणया साध्यवत्त्वावच्छिन्नप्रतियोगिताकबोधजनकत्वे साध्यवदन्य-घटान्यपदयोरुपमानोपमेयभावे निर्विभक्तिकसाध्यवत्पदस्योपमेयभूतस्य निर्विभक्तिकस्यैवोपमान ( घटान्य ) पदस्य संगमनं सयुक्तिकमिति भावः ।

प्रकृत्यर्थेति । प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वस्य ( साध्यवत्त्वावच्छिन्नत्वस्य ) संसर्गमर्यादया - सम्बन्धत्वेन, भानमादृत्य=बोधमादृत्येत्यर्थः । एवञ्च लुप्तविभक्तिस्मारितप्रतियोगित्वे साध्यवत्त्वावच्छिन्नत्वसम्बन्धेन साध्यवतोऽन्वये प्रतियोगित्वस्य च निरूपकत्वसम्बन्धेनान्यपदार्थोपस्थितभेदेऽन्वयः । सर्वत्र लुप्तविभक्तिस्मरणकल्पने 'ऋद्धस्य राजमातङ्गा' इत्यत्र राजपदार्थे ऋद्धपदार्थस्याऽभेदान्वयसम्भवेन तादृशप्रयोगापत्तेर्लुप्तविभक्तिस्मरणकल्पनं न सार्वत्रिकमित्याशयेनाह—कथञ्चिदिति । ननु नञ्समभिव्याहारस्थले प्रतियोगिवाचकघटादिपदस्य सर्वत्र लाक्षणिक-

## जागदीशी

घटः पटो न इत्यादौ पटपदं मुख्यार्थपरमेव, न तु प्रकृत इव पटत्वावच्छिन्नप्रतियोगिताकपरम्, निपातातिरिक्तस्थल एव नामार्थयोर्भेदान्वयस्याऽव्युत्पन्नतया नञ्पदोपस्थाप्यभेदे पटत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेणैव पटस्यान्वयसम्भवात्।

पटत्वावच्छिन्नप्रतियोगिताकत्वन्तु पटत्वमवच्छिन्नत्वं प्रतियोगित्वञ्चेति त्रितयमेव विशेष्यविशेषणभावापन्नं संसर्गः, न तु वस्तुगत्या पटत्वावच्छिन्नं यत्प्रतियोगित्वं तन्मात्रं, पटो नेत्यत्र प्रतियोगितायां पटत्वावच्छिन्नत्वभानस्यानुभवसिद्धत्वात्, अन्यथा प्रतियोगिताव्यक्तिभिरेव

## चन्द्रिका

त्वे घटः पटो नेत्यादौ घटत्वावच्छिन्नप्रतियोगिताकभेदः प्रतीयेत स च प्रकृतेऽविवक्षित इत्यत आह—घटः पटो नेत्यादाविति। मुख्यार्थपरमेव = पटत्वविशिष्टात्मकशक्यार्थपरमेवेत्यर्थः। प्रकृत इवेति = साध्यवदन्य इत्यत्रेवेत्यर्थः। एवञ्च यथाऽत्र साध्यवत्पदं साध्यवत्त्वावच्छिन्नप्रतियोगिताकपरं तथा घटः पटो नेत्यत्र पटपदं पटत्वावच्छिन्नप्रतियोगिताकपरं भवितुन्नार्हतीत्यर्थः। तत्र हेतुमाह—निपातेति। निपातातिरिक्तनामार्थद्वयस्य भेदेनान्वयो न भवति। तथा च साध्यवदन्य इत्यादौ साध्यवत्पदस्य मुख्यार्थपरत्वे नामार्थतया साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वादिरूपभेदसम्बन्धेनान्यपदार्थैकदेशे भेदेऽन्वयो भवितुन्नार्हतीति साध्यवत्पदं साध्यवत्त्वावच्छिन्नप्रतियोगिताकपरमवश्यं वक्तव्यम्, घटः पटो नेत्यादौ तु नञर्थभेदस्य निपातार्थतया तत्र तादृशप्रतियोगिताकत्वसम्बन्धेन पटस्यान्वये क्षत्यभावात् पटपदस्य मुख्यार्थपरत्वस्वीकारे बाधकाभावेन सर्वत्र न भेदादिबोधकपदसमभिव्याहृतपटादिपदानां लाक्षणिकत्वमिति रहस्यम्।

विशेष्यविशेषणभावेति। निरूपितत्वसम्बन्धेन पटत्वविशिष्टं यदवच्छिन्नत्वं स्वरूपसम्बन्धेन तद्विशिष्टं प्रतियोगित्वमेव घटः पटो नेत्यत्र भेदांशे प्रतियोगिनः संसर्ग इति भावः। वस्तुगत्येति। वस्तुतः पटत्वावच्छिन्नत्वविशिष्टं यत् प्रतियोगित्वं तन्मात्रस्य न संसर्गता पटो नेत्यत्र प्रतियोगितायां पटत्वावच्छिन्नत्ववैशिष्ट्यभानस्यानुभवसिद्धत्वात्। अन्यथेति। विशेष्यविशेषणभावानापन्नप्रतियोगितामात्रस्य

तत्तद्विशिष्टबुद्ध्युपपत्तौ पटत्वादेस्तदवच्छेदकत्वमेव न स्यात् मानाभावात्। अत एव केवलान्वयिग्रन्थे वह्निर्नास्तीत्यत्र वह्नित्वमवच्छिन्नत्वं प्रतियोगित्वञ्च संसर्गमर्यादया भासते इति स्वयमप्युक्तम्। इत्थमेव च प्रमेयं नास्ति कम्बुग्रीवादिमान्नास्तीत्यादिशाब्दबोधानां संसर्गकोटावेव

## चन्द्रिका

संसर्गत्वे प्रतियोगिताव्यक्तिभिरेव (पटत्वावच्छिन्नत्वाऽविशिष्टकेवलप्रतियोगिताव्यक्तिभिरेव) तत्तद्विशिष्टबुद्ध्युपपत्तौ (तत्तत्पटादिप्रतियोगिविशिष्टाभावादिबुद्ध्युपपत्तौ) पटत्वादेस्तदवच्छेदकत्व (प्रतियोगितावच्छेदकत्व) मेव न स्यात् पटत्वस्य तदघटकत्वादिति भावः।

मानाभावादिति। प्रतियोगितायां स्वरूपसम्बन्धेन पटत्वावच्छिन्नत्ववैशिष्ट्यस्य भानमेव पटत्वस्य प्रतियोगितावच्छेदकत्वे मानं तत्र तद्वैशिष्ट्यभानाभावे पटत्वस्य प्रतियोगितावच्छेदकत्वमप्रामाणिकमेव स्यादिति। ननु पटत्वविशिष्टावच्छिन्नत्वविशिष्टप्रतियोगित्वस्य संसर्गत्वापेक्षया लाघवात्प्रतियोगितामात्रस्य संसर्गत्वमस्त्वित्यत आह —अत एवेति। निरुक्तत्रितयस्य संसर्गतायाः सर्वसम्मतत्वादेवेत्यर्थः। केवलान्वयिग्रन्थे वह्निर्नास्तीत्यादौ वह्नित्वमवच्छिन्नत्वं प्रतियोगित्वञ्चेति त्रितयं संसर्गमर्यादया भासते इति स्वयमपि=दीधितिकृतापि उक्तम्।

इत्थमेवेति। पटो नेत्यादौ पटत्वविशिष्टावच्छिन्नत्वविशिष्टप्रतियोगित्वस्य (मिथोविशेषणविशेष्यभावापन्नस्य) संसर्गत्वाभ्युपगमे चेत्यर्थः। प्रमेयं नास्ति, कम्बुग्रीवादिमान्नास्तीत्यादिशब्दजन्यबोधानां—स्वरूपसम्बन्धावच्छिन्नप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वस्यासत्त्वेऽपि, गुरुधर्मकम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्य प्रतियोगितायामप्रसिद्धत्वेऽपि च संसर्गकोटावेव प्रतियोगितायां तत्तदवगाहनेन भ्रमत्वमिति भावः। एवञ्च प्रकृते स्वरूपसम्बन्धावच्छिन्ने (प्रमेयत्वमवच्छिन्नत्वं प्रतियोगित्वञ्चेति त्रितयसंसर्गघटकीभूतप्रतियोगित्वे प्रमेयत्वावच्छिन्नत्वस्य विरहेण प्रमेयत्वावच्छिन्नत्वाभाववन्निरुक्तप्रतियोगित्वनिष्ठविशेष्यतानिरूपितप्रमेयत्वावच्छिन्नत्वनिष्ठप्रकारताकत्वस्य तादृशत्रितयसम्बन्धेन प्रमेयविशिष्टाभावविषयकशाब्दबोधादौ सत्त्वेन निरुक्तशाब्दबोधानां भ्रमत्वं बोध्यम्।

जागदीशी

प्रतियोगितायां प्रमेयत्वाद्यवच्छिन्नत्वावगाहितया भ्रमत्वं, संसर्गप्रकारसाधारणविशेष्यविशेषणभावस्यैव भ्रमत्वघटकत्वात्। अन्यथा स्वरूपसम्बन्धेन प्रमेयत्वावच्छिन्नप्रतियोगित्वस्यालीकतया अखण्डतादृशसम्बन्धेन प्रमेयस्याभावधर्म्मिण्यन्वयासम्भवेन भ्रमत्वानुपपत्तेः, सदुपरागेणाप्यसतः संसर्गमर्यादया भानस्य मणिकृतानङ्गीकारात्।

क्लृप्तेन पटत्वाद्यवच्छिन्नप्रतियोगित्वसम्बन्धेन चाभावे प्रमेयस्य सत्त्वेन तादृशसम्बन्धेन भ्रमत्वस्य वक्तुमशक्यत्वात्, पटत्वादेरन्वयि-

चन्द्रिका

ननु संसर्गविशेषणस्य प्रकारत्वाभावात् तदभाववति तत्प्रकारकत्वरूपभ्रमत्वस्य कथं तत्र सम्भव इत्यत आह—संसर्गप्रकारेति। इत्थञ्च संसर्गे प्रकारे च साधारणं यद्विशेष्यत्वं विशेषणत्वञ्च तस्यैवेत्यर्थः। भ्रमत्वघटकत्वादिति। तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठविशेषणताकज्ञानमेव साधारणो भ्रमः, तत्त्वस्य विशेष्यविशेषणभाववत्संसर्गांकेऽपि सम्भवः, एवञ्च प्रकृते शाब्दबोधेऽपि प्रमेयत्वाद्यवच्छिन्नत्वाभाववत्प्रतियोगितानिष्ठविशेष्यतानिरूपितप्रमेयत्वाद्यवच्छिन्नत्वनिष्ठविशेषणताकतया भ्रमत्वमस्त्येवेति बोध्यम्। अन्यथेति। विशेष्यविशेषणभावापन्नतादृशसम्बन्धाऽस्वीकारे सतीत्यर्थः। स्वरूपसम्बन्धेनेति। स्वरूपसम्बन्धेन प्रमेयस्य सर्वपदार्थवृत्तितया—तदभावाऽसम्भवेन तत्प्रतियोगित्वस्य सुतरामलीकत्वमिति। अखण्डेति। धर्मधर्मिभावशून्य—स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगित्वरूपसम्बन्धस्यालीकतया तेन सम्बन्धेन प्रमेयस्याभावेऽन्वयासम्भवेन भ्रमत्वसम्पादनं दुर्घटमिति भावः।

नन्वखण्डतादृशप्रतियोगित्वस्यालीकत्वेऽपि प्रतियोगितात्वरूपेण संसर्गत्वसम्भवान्न काऽप्यनुपपत्तिरित्यत आह—सदुपरागेणापीति। प्रतियोगितात्वरूपसद्धर्मेणापीत्यर्थः। असतः = स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगित्वादेः। संसर्गमर्यादया = संसर्गताख्यविषयतयेत्यर्थः। क्लृप्तेन = अखण्डेन क्लृप्तपटत्वावच्छिन्नप्रतियोगित्वेनेत्यर्थः। प्रमेयस्य = पटरूपप्रमेयस्य। अशक्यत्वादिति। तेन सम्बन्धेन तदभाववति तत्सम्बन्धेन तत्प्रकारकज्ञानस्यैव तत्सम्ब-

जागदीशी

तानवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वादिविशिष्ट-स्यान्वये निराकांक्षत्वाच्च । अन्यथा घटवत्यपि घटो नास्तीत्यादेः प्रमात्वा-पत्तेः, तत्तद्घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटविशिष्टस्य घटविशे-षाभावस्य तत्र सत्त्वात् । एतेन सत्तासमवायिन्यपि गुणादौ विशिष्टसत्ता-त्वावच्छिन्नस्य समवायेनासत्त्ववत् घटत्वाद्यवच्छिन्नप्रतियोगित्वसम्बन्धेन घटत्वावच्छिन्नवतोऽपि घटाद्यभावस्य न तादृशसम्बन्धेन प्रमेयत्वाद्यव-च्छिन्नवत्त्वम्, अतः प्रमेयं नास्तीत्यादौ घटत्वावच्छिन्नप्रतियोगित्वसम्ब-न्धेनैव प्रमेयत्वावच्छिन्नस्यैवाभावांशे भ्रमत्वमित्यपि प्रत्युक्तं, घटत्वादेर-

चन्द्रिका

न्धेन भ्रमत्वस्वीकारात् पटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयस्याभावे सत्त्वेन तत्सम्बन्धेन प्रमेयाभाववत्त्वस्याभावेऽप्रसिद्धत्वादिति भावः ।

पटत्वादेरिति । प्रमेयन्नास्तीत्यादावन्वयि प्रमेयादिकमित्थञ्च यद्धर्मावच्छिन्नस्यान्वयोऽभावे ग्राह्यस्तद्धर्मस्यैवान्वयितावच्छेदकत्वमिति नियमेन पटत्वादेस्तत्रान्वयितानवच्छेदकतया तद्धर्मावच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयस्या-भावेऽन्वयो न सम्भवतीति भावः । निराकाङ्क्षत्वाच्चेति । पटत्वावच्छिन्नप्रति-योगित्वसम्बन्धेनाभावे प्रमेयान्वये आकाङ्क्षाविरहाच्चेत्यर्थः ।

अन्यधर्मावच्छिन्न ( अन्वयितानवच्छेदकधर्मावच्छिन्न ) प्रतियोगित्वसम्बन्धेनाऽ-पि प्रतियोगिनोऽभावेऽन्वयसम्भवे दोषमाह—अन्यथेति । घटवत्यपि पीतघटत्वा-द्यवच्छिन्नप्रतियोगिकाभावसत्त्वेन घटो नास्तीत्यादेः प्रमात्वं स्यादतोऽन्वयितानवच्छे-दकधर्मावच्छिन्नप्रतियोगित्वस्याभावे प्रतियोगिनः संसर्गत्वं न सम्भवतीति भावः ।

एतेनेति । अन्वयितानवच्छेदकधर्मावच्छिन्नप्रतियोगित्वस्याभावे प्रतियोगिनः संसर्गत्वनिराकरणेन, पटत्वाद्यवच्छिन्नप्रतियोगित्वसम्बन्धेनेत्यादिप्रथमोक्तसमाधान-सत्त्वेऽपि दृष्टान्तपूर्वकं दोषान्तरदानेन वेत्यर्थः । यथा समवायसम्बन्धेन गुणादौ सत्तायाः सत्त्वेऽपि विशिष्टसत्तात्वावच्छिन्नायास्तस्या न तत्र सत्त्वं तथा घटत्वावच्छि-न्नप्रतियोगित्वसम्बन्धेन घटत्वावच्छिन्नघटवत्यपि घटाभावे न प्रमेयत्वावच्छिन्नवत्त्वमिति बोध्यम् । प्रत्युक्तमिति । घटत्वादेरन्वयितानवच्छेदकतया घटत्वावच्छिन्नप्रतियो-

जागदीशी

न्वयितानवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वविशिष्टस्यान्वये निराकाङ्क्षतया तथा शाब्दस्यासम्भवादिति ध्येयम् ।

नीलो घटो नास्तीत्यादौ नीलघटत्वस्यान्वयितावच्छेदकत्वे तादृशधर्मावच्छिन्नप्रतियोगित्वमेव संसर्गः, न तु नीलत्वादिप्रत्येकधर्मावच्छिन्नप्रतियोगित्वं, नीलपटस्य पीतघटस्य चाधिकरणे तादृशप्रयोगापलापापत्तेः । नीलत्वोपलक्षितस्य घटत्वमात्रस्यान्वयितावच्छेदकत्वस्थले तु नीलत्वोपलक्षितघटत्वावच्छिन्नप्रतियोगित्वमेव तथा ।

संयोगेन घटो नास्तीत्यादौ तृतीयाविभक्तेर्नावच्छिन्नत्वमर्थः, संसर्गीभूतप्रतियोगितायां तदन्वयासम्भवात्, पदार्थापदार्थयोरन्वयस्य

चन्द्रिका

गित्वसम्बन्धेनाभावांशे प्रमेयत्वावच्छिन्नस्य भ्रमत्वमपि निराकृतमित्यर्थः । तथा शाब्दस्य = प्रमेयं नास्तीत्याकारकशाब्दबोधस्य । तत्र निराकांक्षत्वस्य विवादविषयकत्वेन ध्येयमित्युक्तम् ।

नीलो घटो नास्तीत्यादाविति । नीलो घटो नास्तीत्यादौ नीलघटत्वावच्छिन्नप्रतियोगित्वमेव संसर्गो न तु नीलत्वावच्छिन्नप्रतियोगित्वं, घटत्वावच्छिन्नप्रतियोगित्वं वा, तथा सति नीलत्वाद्यवच्छिन्नाधिकरणताया नीलादिसामान्याभावविरोधितया नीलपटाधिकरणे पीतघटाधिकरणे च क्रमशः नीलत्वावच्छिन्नस्य घटत्वावच्छिन्नस्य च प्रतियोगिनः सत्त्वेन नीलघटो नास्तीति प्रयोगो न स्यात्, अतः समुदितधर्मावच्छिन्नप्रतियोगित्वमेव संसर्गः न तु प्रत्येकधर्मावच्छिन्नप्रतियोगित्वमिति बोध्यम् । विशिष्टस्य संसर्गत्वे मिथो विशेष्यविशेषणभावे तद्घटकसंसर्गस्य च प्रवेशे गौरवादाह—नीलत्वोपलक्षितस्येति । इतरवारकत्वे सति अन्वयितानवच्छेदकत्वमुपलक्षणत्वम् । तथा च नीलत्वोपलक्षितघटाभावस्थले घटत्वमात्रावच्छिन्नप्रतियोगित्वमेव, तथा = संसर्गः । एवं च नीलपटाधिकरणे घटसामान्याभावस्येव पीतघटाधिकरणेऽपि घटसामान्याभावस्येष्टत्वादेव न कापि क्षतिरिति भावः ।

संयोगेनेति—संयोगेन घटो नास्तीत्यादौ संयोगावच्छिन्नघटत्वावच्छिन्नप्रतियोगितायाः संसर्गत्वं नोपपद्येत, घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन हि घटस्याभावेऽन्वयेऽपि तत्र संयोगावच्छिन्नत्वस्यान्वयो न सम्भवति । पदार्थापदार्थयोरन्वयस्य

जागदीशी

निराकांक्षत्वात्, 'पदार्थः पदार्थेनान्वीयते' इति नियमाच्च। किन्तु—अवच्छिन्नप्रतियोगिताकत्वं प्रतियोगितामात्रं वा, अवच्छिन्नत्वसंसर्गेण संयोगादेस्तत्रान्वयादेव विशिष्टलाभात्।

न चैवं संयोगेन घटाभावस्यैव समवायेन घटविशिष्टद्रव्यत्वाभावतया समवायेन कपाले घटो नास्तीति व्यवहारापत्तिः। तृतीयान्तसमभिव्याहारस्थले तदुपस्थाप्यप्रतियोगित्वस्यैव संसर्गतया भानस्य व्युत्पन्नत्वात्, समवायावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावस्य च

चन्द्रिका

पदार्थः = तृतीयार्थावच्छिन्नत्वं, अपदार्थश्च = संसर्गीभूततादृशप्रतियोगित्वं, तयोः सम्बन्धस्य। निराकांक्षत्वात् = आकांक्षाभास्यत्वानभ्युपगमात्। पदार्थः पदार्थेनान्वीयत इति नियमाच्च। तथा चैकपदार्थप्रतियोगिकापरपदार्थानुयोगिकसंसर्गस्यैवाकांक्षाभास्यतया तृतीयार्थावच्छिन्नत्वप्रतियोगिकघटत्वावच्छिन्नप्रतियोगित्वानुयोगिकसंसर्गस्याकांक्षाभास्यत्वं नैव सम्भवतीति भावः। किं तर्हि तृतीयार्थो नास्त्येवेत्यत आह—किन्त्विति। तृतीयाविभक्तेरवच्छिन्नप्रतियोगिताकत्वम्, लाघवात् प्रतियोगितामात्रं वा अर्थः, तथा च—अवच्छिन्नत्वसम्बन्धेन संयोगस्य प्रतियोगितायामन्वयादेव विशिष्टलाभसम्भवात् = घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटविशिष्टे घटसामान्याभावे संयोगावच्छिन्नप्रतियोगिताकत्ववैशिष्ट्यलाभसम्भवादिति भावः।

संयोगेन घटो नास्तीत्यादौ तृतीयाविभक्तेरवच्छिन्नप्रतियोगिताकत्वार्थकत्वे, प्रतियोगितामात्रार्थकत्वे वा संयोगेन घटाभावस्य, समवायेन घटविशिष्टद्रव्यत्वाभावस्य च समनियताभावतयैक्येन समवायावच्छिन्नप्रतियोगिताको घटविशिष्टद्रव्यत्वाभावो यथा घटे वर्तते तथा घटाभावोऽपि वर्तेतेति कपाले समवायेन घटो नास्तीति व्यवहारापत्तिरित्याशयेनाशङ्कते—न चैवं संयोगेनेति।

तृतीयान्तेति—तृतीयान्तसमभिव्याहारस्थले = संयोगेन समवायेनेत्यादिसमभिव्याहारस्थले। तदुपस्थाप्येति—तृतीयान्तसमवायेनेत्यादिपदेनोपस्थाप्यं यत् समवायाद्यवच्छिन्नप्रतियोगित्वं तस्यैवेत्यर्थः। संसर्गतया भानस्य = संसर्गत्वाऽभिन्नविषयत्वस्य। व्युत्पन्नत्वात् = आकांक्षाभानप्रयोज्यत्वात्। तथा च—तृतीयान्तपदेनान्वयबोधस्थले (संयोगेन घटो नास्तीत्यादिबोधस्थले) तृतीयान्तपदो-

जागदीशी

कपाले विरहात्। अस्तु वा घटत्वावच्छिन्नत्वस्येव संयोगादिसम्बन्धावच्छिन्नत्वस्यापि प्रतियोगित्वांशे संसर्गमर्यादयैव भानम्, तृतीयान्तसमभिव्याहारस्य नियामकत्वाच्च नातिप्रसङ्गः।

घटानधिकरणं भूतलमित्यादौ तु लक्षणयाऽधिकरणपदमेव घटाधिकरणार्थकम्, घटपदन्तु तात्पर्यग्राहकम्, अन्यथाऽनधिकरणपदेना-

चन्द्रिका

पस्थाप्यसंयोगावच्छिन्नघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटविशिष्टाभावस्य समवायेन घटविशिष्टद्रव्यत्वाभावेन भेदान्न समवायेन कपाले घटो नास्तीति व्यवहारापत्तिरिति भावः।

प्रोक्तस्थले प्रतियोगित्वांशे यथा घटत्वावच्छिन्नत्वस्य लाघवात् संसर्गविधया भानं तथा संयोगावच्छिन्नत्वस्यापि संसर्गविधयैव भानमस्तु प्रकारविधया भानस्वीकारे तस्यापि स्वरूपादिसम्बन्धावच्छिन्नत्वे गौरवमित्यभिप्रेत्याह—अस्तु वेति। विशेष्यविशेषणभावापन्नस्य घटत्वावच्छिन्नत्वस्येव प्रतियोगित्वांशे विशेष्यविशेषणभावापन्नस्य संयोगादिसम्बन्धावच्छिन्नत्वस्यापि संसर्गविधयैव भानमस्तु इत्यर्थः। तथा च तृतीयान्तसमभिव्याहारस्य नियामकतया संयोगेन घटो नास्तीत्यत्र समवायावच्छिन्नघटत्वावच्छिन्नप्रतियोगित्वस्य संसर्गत्वाभावेन न समवायेन कपाले घटो नास्तीति व्यवहारापत्तिरिति भावः।

ननु यदि सर्वत्र नञाद्यर्थेऽभावे स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगित्वं प्रतियोगिनः संसर्गस्तदा घटानधिकरणं भूतलमित्यादावधिकरणत्वावच्छिन्नतादात्म्यावच्छिन्नप्रतियोगितासम्बन्धेन अधिकरणविशिष्टभेदवद् भूतलमित्यर्थः प्रतीयेत, तस्य च भूतले बाधिततयाऽसम्बद्धप्रलापः स्यादित्यत आह—घटानधिकरणमिति। अधिकरणपदस्य शक्त्या घटाद्यधिकरणबोधकत्वे सर्वत्र तथैव बोधेनातिप्रसङ्गः स्यादित्यत आह—लक्षणयेति। लक्षणायास्तु रूढिप्रयोजनाभ्यां नियततया न सर्वत्रातिप्रसङ्ग इति भावः। तात्पर्यग्राहकम् = घटाधिकरणार्थतात्पर्यग्राहकम्। तथा च पदार्थबोधे वक्तुस्तात्पर्यज्ञानस्य नियामकतया घटपदस्याधिकरणपदं घटाधिकरणबोधेच्छयोच्चरितं न तु पटाद्यधिकरणबोधेच्छयेति तात्पर्यग्राहकत्वं बोध्यम्। अन्यथेति। अधिकरणपदस्य घटाधिकरणार्थकत्वाभावे इत्यर्थः। तस्य = अधिकरणसामान्यभेदस्य]।

जागदीशी

धिकरणसामान्यभिन्नत्वोक्तौ च भूतले तस्य बाधः स्यात्। न च घटान्वितस्यैवाधिकरणस्य भेदस्तत्र नञा बोधनीयः, समासान्तर्गतनञ उत्तरपदार्थमात्रान्वयित्वव्युत्पत्तेः। अन्यथा नीलाघटो घट इत्यादौ नीलघटान्यस्य घटत्वं, नीलाप्रमेयः पट इत्यादौ च नीलप्रमेयान्यस्य पटत्वं प्रतीयेत।

वस्तुतः ससम्बन्धिकपदस्थले व्युत्पत्तिवैचित्र्यात् प्रतियोगितानव-

चन्द्रिका

शङ्कते—न चेति। घटानधिकरणं भूतलमित्यादौ घटाद्यन्वितस्यैवाधिकरणस्य भेदो नञा बोधनीयः। समाधत्ते—समासेति। तथा च समासान्तर्गतनञर्थस्योत्तरपदार्थमात्रान्वयित्वेनाधिकरणमात्रस्यैव भेदं बोधयेन्न तु घटान्विताधिकरणस्येति बोध्यम्। अधिकरणत्वस्य तु केवलान्वयितया तदवच्छिन्नभेदाऽप्रसिद्धया तत्राधिकरणपदं घटाधिकरणपरमेव, घटपदन्तु तात्पर्यग्राहकमित्यर्थ एव श्रेयानिति भावः।

अन्यथेति। समासान्तर्गतनञर्थस्योत्तरपदार्थमात्रान्वयित्वमिति व्युत्पत्त्यनभ्युपगम इत्यर्थः। नीलाघट इति। नीलाघटो घटः, नीलाप्रमेयः पट इत्यादौ घटभेदस्य घटे, प्रमेयभेदस्य च पटे बाधिततया नीलघटान्यस्य घटत्वप्रतीतिः, नीलपटान्यस्य च पटत्वप्रतीतिर्भ्रमात्मिका भवति। तादृशव्युत्पत्त्यनङ्गीकारे तु—नीलान्वितघटस्य पीतघटे, नीलान्वितप्रमेयस्य च पीतपटे भेदोऽस्त्येवेति तादृशवाक्यानां प्रामाण्यं दुर्वारं स्यादित्याशयः।

ननु नीलाघटो घट इत्यादिवाक्यजन्यबोधस्य प्रमात्वनिरासाय समासान्तर्गतेत्यादिव्युत्पत्तिस्वीकारावश्यकत्वेऽपि घटानधिकरणं भूतलमित्यादौ घटपदसार्थक्याय घटाद्यन्विताधिकरणभेदो नञा बोध्यताम्, किमधिकरणपदस्य घटाधिकरणे लक्षणामभ्युपेत्य घटपदस्य तात्पर्यग्राहकत्वरूपगुरुकल्पनयेत्यत आह—वस्तुत इति। ससम्बन्धिक (साकाँक्ष) पदस्थले व्युत्पत्तिवैचित्र्यात् = समासान्तर्गतनञर्थस्य पूर्वपदार्थान्वितोत्तरपदार्थान्वयित्वरूपव्युत्पत्तिवैचित्र्यात् यथा प्रतियोगितानवच्छेदकमित्यादौ प्रतियोगितावच्छेदकादेर्भेदो भासते, तथा घटानधिकरणं भूतलमित्यादावपि घटान्विताधिकरणस्य भेदो भूतले भासेतेति भावः।

जागदीशी

च्छेदकं घटानधिकरणमित्यादौ घटाद्यन्वितस्यैवाधिकरणादेर्भेदो भासते, अन्यत्र त्रिपदतत्पुरुषानुपगमेऽपि घटस्य नाधिकरणं, प्रतियोगिताया नावच्छेदकमित्यादिरीत्या त्रिपदतत्पुरुषेण विशिष्टलाभसम्भवादिति परमार्थः।

पीतः शङ्खो नास्तीत्यादिशाब्दबोधस्तु शङ्खत्वावच्छिन्नतया न प्रतियोगित्वमवगाहते, तन्मात्रस्यान्वयितानवच्छेदकत्वात्, शङ्खवत्तया निश्चिते धर्मिण्यपि तादृशप्रयोगात्। किन्तु पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेन संसर्गमर्यादया प्रतियोगित्वमवगाहते। नञादिपदानां यद्धर्मविशिष्टवैशिष्ट्यावगाहित्वोपस्थाप्याभावधर्मिकान्वयबोधजनकत्वं तद्धर्मावच्छिन्नप्रतियोगितात्वेन प्रतियोगितासंसर्गकधीजनकत्वव्युत्पत्तेः।

चन्द्रिका

ननु– न अधिकरणमनधिकरणं घटस्यानधिकरणं घटानधिकरणमिति विग्रहो न सम्भवति, तत्समासोत्तरपदार्थेन समं तत्समासानिविष्टपदार्थान्तरान्वयस्यादृष्टचरत्वात्। न च घटस्य न अधिकरणमिति विग्रहः सम्भवति, त्रिपदतत्पुरुषस्यास्वीकार्यत्वादित्यत आह—अन्यत्रेति। ननु यद्यभावे सर्वत्र स्वान्वयितावच्छेदकावच्छिन्नप्रतियोगित्वमेव प्रतियोगिनः सम्बन्धस्तदा पीतः शङ्खो नास्तीत्यादौ पीतशङ्खत्वस्याप्रसिद्धतया तदवच्छिन्नप्रतियोगित्वसम्बन्धस्याप्यप्रसिद्धत्वेनान्वयबोध एव न स्यादित्यत आह—पीतः शङ्खो नास्तीति। तन्मात्रस्य = शङ्खत्वमात्रस्य। अन्वयितानवच्छेदकत्वात् = शाब्दबोधीयप्रकारतावच्छेदकत्वाभावात्। तादृशप्रयोगात् = पीतः शङ्खो नास्तीति प्रयोगात्। तथा च शङ्खवत्तया निश्चितेऽपि शुक्लादिशंखवति धर्मिणि भूतलादौ पीतः शङ्खो नास्तीति व्यवहारस्योदयेन प्रकृते पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेन, पीतत्वशङ्खत्वधर्मद्वयावच्छिन्नप्रतियोगितात्वविशिष्टप्रतियोगितात्वेनैव वा संसर्गमर्यादया प्रतियोगित्वमवगाहत इति न काचित्क्षतिरिति भावः।

पीतः शङ्खो नास्तीत्यादौ शङ्खत्वावच्छिन्नप्रतियोगितां नावगाहते किन्तु पीतशङ्खत्वावच्छिन्नप्रतियोगितामेवेत्यत्र प्राचां सम्वादमाह—नञादिपदानामिति। अत्र स्वपदं नञ्परम्, तदुपस्थाप्योऽभावः ( भेदः )। एवञ्च यद्धर्मावच्छिन्नप्रकार-

जागदीशी

इयांस्तु विशेषः—यत् घटो नास्तीत्यादिशाब्दबोधे सांसर्गिकप्रतियोगित्वावगाहिता प्रसिद्धेन घटत्वाद्यवच्छिन्नप्रतियोगितात्वेनैव निरूपिता, पीतः शङ्खो नास्तीत्यादौ तु पीतशङ्खत्वाद्यवच्छिन्नप्रतियोगितात्वेनाप्रसिद्धेनैवेत्यादिकं बहुतरमूहनीयम् ॥

इति श्रीजगदीशतर्कालङ्कारविरचिता व्याप्तिपञ्चकदीधितिव्याख्या समाप्ता ॥

---

चन्द्रिका

तानिरूपकाभावत्वावच्छिन्नविशेष्यताशालिबोधो नञ्पदसत्त्वेन भवति, तद्धर्मावच्छिन्नप्रतियोगितात्वविशिष्टप्रतियोगिताया एव संसर्गमर्यादया भानमिति नियमः। प्रकृते च पीतः शङ्खो नास्तीत्यत्र पीतशङ्खत्वावच्छिन्नप्रकारतानिरूपकाभाव (भेद) निष्ठविशेष्यताशालिबोधो भवतीति पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वविशिष्टप्रतियोगिताया एव संसर्गमर्यादया भानमुचितमिति भावः।

नन्वेवं घटो नास्ति, पीतः शङ्खो नास्तीत्यनयोः को भेद इत्यत आह—इयांस्त्विति। विशेषः = वैलक्षण्यम्। अवगाहितेत्यस्य विषयितेत्यर्थः। इत्थञ्च घटो नास्तीत्यादिवाक्यजन्यशाब्दबोधनिष्ठा सांसर्गिकप्रतियोगित्वविषयिता प्रसिद्धधर्मावच्छिन्नप्रतियोगित्वनिष्ठनिरूपकतानिरूपितनिरूप्यतावती। पीतः शङ्खो नास्तीत्यादौ त्वप्रसिद्धधर्मावच्छिन्नप्रतियोगित्वनिष्ठनिरूपकतानिरूपितनिरूप्यतावतीत्यनयोः प्रसिद्धाप्रसिद्धधर्मावच्छिन्नप्रतियोगिताकाभावावगाहित्वेनैव भेदो बोध्य इति भावः।

बहुतरमूहनीयमिति। तथा च साध्याभाववदवृत्तित्वादि—लक्षणपञ्चकस्य वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वाद्यभावादेः स्वरूपतोऽप्रसिद्धत्वेनैवाऽव्याप्तिरित्यूहनीयमिति शम्।

इति श्रीजगदीशतर्कालङ्कारविरचित—व्याप्तिपञ्चकदीधितिव्याख्यायाश्चन्द्रिका टीका समाप्ता ॥

---

ॐ

॥ श्रीगणेशाय नमः ॥

# ॥ अथ सिंहव्याघ्रलक्षणम् ॥

चिन्तामणिः

नापि साध्यासामानाधिकरण्यानधिकरणत्वम् ।

दीधितिः

**नापीति ।** साध्यमसमानाधिकरणं यस्य, यदधिकरणानधिकरणं साध्यं तत्त्वम् ।

जागदीशी

साध्यासामानाधिकरण्यपदस्य साध्यवद्भिन्नवृत्तित्वार्थकत्वे साध्यवैयधिकरण्येत्याद्युत्तरलक्षणेन पौनरुक्त्यापत्तिरतो व्याचष्टे—साध्यमसमानाधिकरणं यस्येति । तत्त्वमिति परेणान्वयः । वह्निमात्रस्यैव व्यधिक-

चन्द्रिका

साध्यासामानाधिकरण्येत्यादिलक्षणघटकीभूतसाध्यासामानाधिकरण्यपदं दीधितौ व्याचष्टे—साध्यमसमानाधिकरणं यस्येत्यादि । वह्निमान् धूमादित्यादिसद्धेतौ—लक्षणसमन्वयस्तु—साध्या ( वह्नय ) सामानाधिकरण्यं = साध्यवैयधिकरण्यं घटादेः, तदनधिकरणत्वम् = धूमस्येतीत्थं बोध्यः ।

दीधितिः

साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम् ।

जागदीशी

रणतत्तद्धूमासमानाधिकरणत्वात् वह्निमान् धूमादित्यादावव्याप्तेराह— यदधिकरणेति । यदधिकरणमनधिकरणं यस्येति व्युत्पत्त्या यस्याधिकरणं साध्यानधिकरणं तत्त्वमित्यर्थः ।

तत्तद्धूमाधिकरणं तु न वह्निसामान्यानधिकरणमतो नाव्याप्तिरिति भावः । ननु घटादिस्वरूपयद्व्यक्त्यधिकरणं साध्यीभूतधूमाद्यनधिकरणं तद्व्यक्तित्वानधिकरणत्वं वह्न्यादेरप्यतो धूमवान्वह्नेरित्यादावतिव्याप्तिः । यद्यद्व्यक्त्यधिकरणं साध्यानधिकरणं तत्तद्व्यक्तित्वानधिकरणत्वोक्तौ तु महागौरवमत आह— साध्यनिष्ठेति । साध्यनिष्ठाभावप्रतियोगित्वं सद्धेतोरप्यस्तीत्यतः सामानाधिकरण्याभाव उक्तः ।

चन्द्रिका

साध्यमसमानाधिकरणमित्यादिप्रकारेणार्थकरणे हेतुमाह— साध्यासामानाधिकरण्यपदस्येति । अथैवं वह्निमान् धूमादित्यत्र साध्यं=( पर्वतीयादिवह्निः ) असमानाधिकरणं यस्य=महानसीयादिधूमस्य, तत्त्वानधिकरणत्वं न धूमहेतोरित्यभिप्रायेणाह—वह्निमात्रस्यैवेति । यदधिकरणानधिकरणमिति—तथा च— यस्य=(घटादेः) अधिकरणं=भूतलादि साध्यस्य ( वह्न्यादेः ) अनधिकरणं तत्त्वस्यानधिकरणत्वं धूमस्येति लक्षणसमन्वयः । नन्वेवं तत्तद्धूमाधिकरणमादाय पूर्वोक्ताऽव्याप्तिः स्यात् तत्तद्धूमाधिकरणस्य महानसादेरपि वह्निसामान्याधिकरणत्वाभावादित्यत आह—तत्तद्धूमाधिकरणन्त्विति । नन्वेवमपि धूमवान्वह्नेरित्यादावतिव्याप्तिरित्याशयेनाह—नन्विति । तद्व्यक्तित्वानधिकरणत्वं=घटादिस्वरूपतद्व्यक्तित्वानधिकरणत्वम् । यद्यद्व्यक्त्यधिकरणमिति । तथा च धूमवान्वह्नेरित्यत्र यद्यद्व्यक्तिपदेन वह्नेरपि ग्रहणसम्भवेन तद् ( वह्नि ) व्यक्त्यधिकरणमयोगोलकं साध्यस्या ( धूमस्या ) नधिकरणं तद्व्यक्तित्वानधिकरणत्वं न वह्नेरित्यतिव्याप्त्यभावेऽपि महागौरवमननुगमश्चेत्याह—साध्यनिष्ठेतीति । साध्य ( वह्नि ) निष्ठमसामाना-

### जागदीशी

न च साध्यनिष्ठस्य सामानाधिकरण्याभावस्य प्रतियोगित्वं सामानाधिकरण्य एव न तु वह्न्यादावित्यसद्धेतावतिव्याप्तिः । साध्यनिष्ठाभावप्रतियोगिवृत्तित्वनिरूपकाधिकरणवृत्तित्वस्य विवक्षितत्वात् । वस्तुतः असामानाधिकरण्यं सामानाधिकरण्यसम्बन्धेनाभाव इति तु परमार्थः ।

न चैवं द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः, सामानाधिकरण्याभावस्य व्याप्यवृत्तित्वेन साध्यानिष्ठत्वात्, एतदस्वरसेनैव वा कल्पान्तरानुसरणादित्यपरे ।

नन्वेवमपि वह्निमान्धूमादित्यादिविषमव्याप्ते हेतावव्याप्तिः । महानसीयवह्निनिष्ठस्य पर्वतवृत्तित्वाद्यभावस्य प्रतियोगिभूतं यदाधेयत्वं तन्नि-

### चन्द्रिका

धिकरण्यम् ( सामानाधिकरण्याभावः=मीनादयधिकरणजलादिवृत्तित्वाभावः ) तत्प्रतियोगित्वस्य तादृशवृत्तित्वनिष्ठस्यानधिकरणत्वं धूमादाविति साध्यनिष्ठसामानाधिकरण्याभावप्रतियोगित्वानधिकरणत्वरूपलक्षणसमन्वयः । ननु यस्याभावः स प्रतियोगीति नियमेन साध्यनिष्ठसामानाधिकरण्याभावस्य प्रतियोगि सामानाधिकरण्यमेवेति तत्त्वानधिकरणत्वस्य वह्न्यादौ सत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिरिति चेत्तत्राह—साध्यनिष्ठाभावेति । साध्यनिष्ठोऽभावः अयोगोलकवृत्तित्वाभावः तत्प्रतियोगित्वमयोगोलकवृत्तित्वे तन्निरूपकाधिकरण ( अयोगोलक ) वृत्तित्वस्यैव वह्नौ सत्त्वेन नातिव्याप्तिरिति भावः । साध्यनिष्ठासामानाधिकरण्येत्यस्य यथाश्रुतपंक्त्यक्षरानुसारमर्थमाह = वस्तुत इति ।

न चैवमिति । एवमित्यस्य साध्यनिष्ठाभावप्रतियोग्यादिविवक्षायाम्, सामानाधिकरण्यसम्बन्धेन साध्यनिष्ठाभावप्रतियोगित्वविवक्षायाञ्चेत्यर्थः । द्रव्यं विशिष्टसत्त्वादित्यादौ गुणाद्यवच्छेदेन विशिष्टसत्त्वसामानाधिकरण्याभावस्य द्रव्यत्वे = साध्ये सत्त्वेन परम्परया तादृशाभावप्रतियोगित्वस्य विशिष्टसत्त्वे सत्त्वेन तदनधिकरणत्वाभावादव्याप्तिः स्यादित्यतः कल्पान्तरानुसरणमिति केचित् ।

नन्वेवमपीति । ननु वह्निमान् धूमादित्यत्र महानसीयवह्निनिष्ठो यः पर्वतादिवृत्तित्वाभावः तस्य प्रतियोगिभूतं पर्वतादिवृत्तित्वं तन्निरूपकाधिकरणपर्वतादिवृत्तित्व-

: दीधितिः

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत्, तदनधिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्य साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसङ्गः।

जागदीशी

रूपके पर्वतादौ धूमादेर्वर्तमानत्वात्, साध्यसामान्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वोक्तौ च महागौरवमत आह—साध्यनिष्ठाधेयत्वेति। अत्राधेयत्वं साध्यताघटकसम्बन्धेन ग्राह्यम्।

तेन रूपवान् महाकालत्वादित्यादौ सम्बन्धसामान्येन रूपनिष्ठाधेयत्वानिरूपके गगनादौ हेतोरवृत्तित्वेऽपि नातिव्याप्तिः। तद्वृत्तौ=साध्यवद्भिन्नवृत्तौ। ननु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमवश्यं

चन्द्रिका

स्यैव धूमे सत्त्वेन साध्यनिष्ठाभावप्रतियोगिवृत्तित्वनिरूपकाधिकरणवृत्तित्वानधिकरणत्वरूपलक्षणस्याव्याप्तिरित्यत आह दीधितौ--साध्यनिष्ठेति। इत्थञ्च साध्य (वह्नि) निष्ठाधेयताया निरूपकमेव महानसादिकमिति साध्यनिष्ठाधेयताऽनिरूपकाधिकरणं ह्रदादिकमेव, तत्र वृत्तित्वं मीनसैवालादीनां तदनधिकरणत्वं धूमे वर्तत इति लक्षणसमन्वयः।

साध्यनिष्ठाधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षायाः फलमाह—तेनेति। अन्यथा कालिकादिसम्बन्धसामान्येन रूपनिष्ठाधेयताऽनिरूपकाधिकरणं (नित्ये कालिकायोगादिति नियमेन) गगनादिकमेव तत्र हेतोः (महाकालत्वस्य) अवृत्तित्वेन रूपवान्महाकालत्वादित्यादावतिव्याप्त्यापत्तेः। साध्यतावच्छेदकसम्बन्धेनाधेयताया विवक्षणे तु तादृशसमवायसम्बन्धेन साध्य ( रूप ) निष्ठाधेयत्वानिरूपकाधिकरणं महाकाल एव तत्र हेतोः ( महाकालत्वस्य ) सत्त्वेन नातिव्याप्तिरिति भावः।

: दीधितिः

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः, तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः ।

जागदीशी

हेतुताघटकसम्बन्धेन वाच्यम्, अन्यथा वह्निनिष्ठाधेयत्वानिरूपके स्वावयवे समवायादिना धूमादेः सत्त्वादव्याप्त्यापत्तेः ।

तथा च सत्तावान् द्रव्यत्वाद्धूमाद्वेत्यादावव्याप्तिः, साध्यनिष्ठाधेयत्वानिरूपके जात्यादौ समवायेन संयोगेन वा वृत्त्यप्रसिद्धेः । किञ्च द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः, द्रव्यत्वनिष्ठाधेयत्वानिरूपकगुणादिवृत्तित्वस्य विशिष्टसत्तायां सत्त्वादित्यत आह—साध्यनिष्ठेति ।

चन्द्रिका

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वस्य हेतुतावच्छेदकसम्बन्धेन विवक्षायाः फलमाह—अन्यथेति । साध्य ( वह्नि ) निष्ठाधेयत्वानिरूपकाधिकरणे धूमावयवे ( हेतुतावच्छेदकसंयोगसम्बन्धातिरिक्त ) समवायसम्बन्धेन हेतोः ( धूमस्य ) वृत्त्याऽव्याप्तिः स्यादिति भावः ।

हेतुतावच्छेदकसम्बन्धेन वृत्तित्वस्य विवक्षणे दोषमग्रिमग्रन्थावतरणभूतमाह—तथा चेति । सत्तायाः साध्यत्वे द्रव्यत्वहेतौ हेतुतावच्छेदकसम्बन्धः समवायः धूमहेतौ च संयोग इत्युभयविधसम्बन्धेन—साध्य ( सत्ता ) निष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ वृत्तित्वाऽप्रसिद्धया तत्राव्याप्तिः । द्रव्यत्वनिष्ठाधेयत्वाऽनिरूपके गुणादौ ( विशिष्टः शुद्धान्नातिरिच्यत इति न्यायेन ) सत्तायाः सत्त्वेन तदभिन्नविशिष्टसत्त्वस्यापि सत्त्वाद् द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिश्चेत्यत आह दीधितौ—साध्यनिष्ठेति । ननु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वसमानाधिकरणाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति विवक्षायामेव पूर्वोक्तदोषवारणसम्भवे व्यर्थो व्यापकत्वनिवेशः, तथा हि—सत्तावान् द्रव्यत्वादित्यत्र सत्तानिष्ठाधेयत्वानिरूपकाधिकरणत्वं सामान्यादौ वर्तते तत्र तादृशाधिकरणत्वसमानाधिकरणाभावः

### जागदीशी

धूमनिष्ठाधेयत्वानिरूपके जलादौ वह्न्यधिकरणत्वाभावसत्त्वाद्व्यभिचारिण्यतिव्याप्तिरतो व्यापकेति । व्यापकत्वन्तु प्रतियोगिवैयधिकरण्याघटितमेव ग्राह्यम् , तेन संयोगेन वह्न्यधिकरणत्वस्याव्याप्यवृत्तितया तदभावस्य तप्तायःपिण्डवृत्तित्वेऽपि नातिव्याप्तिः ।

### चन्द्रिका

द्रव्यत्वाधिकरणत्वाभावः तत्प्रतियोगिद्रव्यत्वाधिकरणतासामान्यकत्वं द्रव्यत्वे वर्तते । एवं द्रव्यं विशिष्टसत्त्वादित्यत्र द्रव्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणत्वसमानाधिकरणाभावप्रतियोग्यधिकरणतासामान्यकत्वं विशिष्टसत्तायामिति चेत् तत्राह—धूमनिष्ठेति । तथा निवेशे धूमवान् वह्नेरित्यत्रातिव्याप्तिः, तथा हि—धूमनिष्ठाधेयत्वानिरूपकाधिकरणजलादिनिष्ठाधिकरणत्वसमानाधिकरणाभावः वह्न्यधिकरणत्वाभावः तत्प्रतियोग्यधिकरणतासामान्यकत्वं वह्न्यादाविति । व्यापकत्वनिवेशे तु धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावो न वह्न्यधिकरणत्वाभावः धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्ववत्सामान्यान्तर्गतायोगोलक एव वह्न्यधिकरणत्वाभावस्य विरहेण वह्न्यधिकरणत्वाभावाभावस्य च सत्त्वेन तादृशाभावप्रतियोगितावच्छेदकमेव वह्न्यधिकरणत्वाभावत्वमिति तद्वतः स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवत्त्वरूपव्यापकत्वस्य विरहादतिव्याप्तिविरह इति भावः । प्रतियोगिवैयधिकरण्यघटितव्यापकत्वस्य निवेशे धूमवान् वह्नेरित्यत्र धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्ववत्ययोगोलके वृत्तिः प्रतियोगिव्यधिकरणाभावः ( वह्न्यधिकरणत्वाभावाभावो न तादृशः, तस्याव्याप्यवृत्तित्वेन वह्न्यधिकरणत्वाभावरूपप्रतियोगिसमानाधिकरणत्वात् ) घटाद्यधिकरणत्वाभाव एव, तत्प्रतियोगितानवच्छेदकमेव वह्न्यधिकरणत्वाभावत्वमिति तादृशव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वं वह्नाविति भवत्यतिव्याप्तिः । प्रतियोगिवैयधिकरण्याघटितव्यापकत्वनिवेशे तु अव्याप्यवृत्तितया वह्न्यधिकरणत्वाभावाभावस्यापि अयोगोलके सत्त्वेन तादृशाभावप्रतियोगितावच्छेदकमेव वह्न्यधिकरणत्वाभावत्वमिति व्यापकत्वविरहेणातिव्याप्तिविरह इत्यभिप्रायेणाह—व्यापकत्वन्त्विति ।

नन्वेवमपि धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्ववत्ययोगोलके वह्न्यधिकरणत्वाभावाभावस्य सत्त्वेऽपि वह्न्यधिकरणत्वगगनोभयत्वावच्छिन्नाभावाभावस्या ( उभयत्वावच्छिन्नाभावाभावस्योभयत्वावच्छिन्नरूपतया तदन्तर्गतगगनस्य कुत्राप्य-

जागदीशी

वह्न्यधिकरणत्वगगनोभयत्वाद्यवच्छिन्नाभावस्य धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादतिव्याप्तिरतः सामान्यपदम्। तथा च हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसामान्याभावत्वेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वं तद्धर्मवत्त्वमर्थः।

तेन वह्निनिष्ठाधेयत्वानिरूपकाधिकरणे जलादौ कालिकसम्बन्धेन धूमाधिकरणतायाः सत्त्वेऽपि नाव्याप्तिः। न वा वह्न्यधिकरणत्वाभावस्यापि प्रमेयत्वादिना धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वेऽप्यतिव्याप्तिः।

चन्द्रिका

सत्त्वेन ) सत्त्वात्, अन्यविधाभावप्रतियोगितानवच्छेदकत्वस्य वह्न्यधिकरणत्वगगनोभयत्वावच्छिन्नाभावत्वे सत्त्वेन साध्य ( धूम ) निष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापका ( वह्न्यधिकरणत्वगगनोभयत्वावच्छिन्ना ) भावप्रतियोगि ( वह्न्यधिकरणता ) कत्वस्य वह्नौ सत्त्वेनातिव्याप्तिस्तद्वारणाय सामान्यपदोपादानमित्याशयेनाह—वह्न्यधिकरणत्वेति।

अधिकरणतासामान्यस्वस्वाधिकरणतात्वेतरधर्मानवच्छिन्नत्वे सत्यधिकरणतात्वावच्छिन्नत्वम्, तेन प्रकृते वह्न्यधिकरणताया अधिकरणतात्वेतरोभयत्वधर्मावच्छिन्नत्वेन नातिव्याप्तिरिति भावः।

सामान्यपदोपादानेन फलितार्थमाह—तथा चेति। हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशस्य फलमाह—तेनेत्यादि। यद्धर्मावच्छिन्नाधिकरणत्वसामान्याभावत्वावच्छिन्नव्यापकताप्रवेशस्य फलमाह—न वेति। अत्राभावत्वावच्छिन्नत्वाप्रवेशे साध्य (धूम) निष्ठाधेयत्वानिरूपकाधिकरणत्ववत्ययोगोलकादौ यो वह्न्यधिकरणत्वाभावाभावस्तत्प्रतियोगितानवच्छेदकप्रमेयत्वस्य वह्नित्वावच्छिन्नाधिकरणत्वसामान्याभावे सत्त्वाद्धूमवान् वह्नेरित्यत्रातिव्याप्तिः। व्यापकतायान्तादृशाभावत्वावच्छिन्नत्वनिवेशे तु तादृशायोगोलकनिष्ठतादृशाभावप्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वान्न तत्रातिव्याप्तिरिति भावः। अथ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकता

जागदीशी

न च हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाभावत्वेन तादृशाधिकरणताया व्यापकत्वमित्यस्यैव सम्यक्त्वेऽधिकरणत्वप्रवेशो व्यर्थ इति वाच्यम्, वृत्त्यनियामकसम्बन्धेन हेतुतायामव्याप्तिप्रसङ्गात्, तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः। अस्माकं तु तादृशसम्बन्धेन यद्धेतुसम्बन्धित्वं तस्य स्वरूपसम्बन्धावच्छिन्नाभावमादाय लक्षणसमन्वयात्।

किं चाधिकरणत्वाप्रवेशे वह्न्यादेः साध्यत्वे संयोगादिसम्बन्धेन रूपादिहेतावतिव्याप्त्यापत्तिः। संयोगेन रूपाद्यभावस्य केवलान्वयितया वह्निनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादिति भावः।

इति प्रथमलक्षणजागदीशीव्याख्या समाप्ता।

चन्द्रिका

हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ना तद्धर्मवत्त्वं व्याप्तिरित्यस्यैव सम्यक्त्वेऽधिकरणत्वप्रवेशो व्यर्थं इत्याशंकते—न चेति। यद्धर्मावच्छिन्नाभावत्वेनेत्यस्य = हेतुतावच्छेदकधर्मावच्छिन्नाभावत्वेनेत्यर्थः। तादृशाधिकरणतायाः = साध्यनिष्ठाधेयत्वानिरूपकाधिकरणतायाः। समाधत्ते—वृत्त्यनियामकेति। चैत्रत्वसाध्यके स्वामित्वसम्बन्धेन तद्धनहेतावित्याशयः। ननु वृत्त्यनियामकसम्बन्धेनाधिकरणत्वस्याप्यप्रसिद्ध्या तस्य प्रवेशेऽपि तत्राव्याप्तिर्दुर्वारैवेत्यत आह—अस्माकन्त्विति।

ननु वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाऽभ्युपगमे पूर्वोक्तदोषाभावेनाधिकरणत्वप्रवेशो व्यर्थ एवेत्यत आह—किञ्चेति। अधिकरणत्वाऽप्रवेशे वह्निसाध्यके संयोगेन रूपादिहेतुकासद्धेतुस्थले साध्य (वह्नि) निष्ठाधेयत्वानिरूपकाधिकरणत्ववति = जलादौ संयोगेन रूपाद्यभावस्य (केवलान्वयितया) सत्त्वेन संयोगेन रूपाद्यभावाभावस्यासत्त्वेन च तादृशाधिकरणत्वव्यापकतावच्छेदकत्वस्य संयोगेन रूपत्वावच्छिन्नाभावत्वे सत्त्वेनातिव्याप्तिः स्यादेव, अधिकरणत्वप्रवेशे तु तादृशाधिकरणत्वव्यापकरूपाद्यभावप्रतियोगिनः संयोगेनाधिकरणत्वाऽप्रसिद्ध्या नातिव्याप्तिरिति भावः।

इति सिंहव्याघ्रजागदीश्याः प्रथमलक्षणस्य चन्द्रिका व्याख्या समाप्ता।

### चिन्तामणिः

सांध्यवैयधिकरण्यानधिकरणत्वं वा । तदुभयमपि साध्यानधिकरणानधिकरणत्वम् । तच्च तत्र यत्किञ्चित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम् । इति ॥

### दीधितिः

साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वम् ।

चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय द्वयमेकोक्त्याऽनूद्य दूषयति—तदुभयमपीति ।

### जागदीशी

साध्यवद्भिन्नेति । अत्रापि साध्यवद्भिन्नत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षो बोध्यः । तेन सत्तावान् द्रव्यत्वादित्यादौ नाव्याप्तिः ।

### चन्द्रिका

अत्रापीति । द्वितीयलक्षणेऽपीत्यर्थः । हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसामान्याभावत्वावच्छिन्नं साध्यवद्भिन्नत्वव्यापकत्वं तद्धर्मवत्त्वमित्यर्थो बोध्यः । अन्यथा साध्यवद्भिन्नाधिकरणनिरूपितवृत्तित्वानधिकरणत्वस्य लक्षणत्वे पूर्वलक्षणवदेव वह्निमान् धूमादित्यादौ–साध्यव (वह्निम) द्भिन्नाधिकरणे धूमावयवे समवायेन धूमहेतोः वृत्तितयाऽव्याप्तिभिया वृत्तित्वं हेतुतावच्छेदकसम्बन्धेन वाच्यम्, तथा च सत्तावान् द्रव्यत्वादित्यत्र साध्य ( सत्ता ) वद्भिन्नसामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तित्वाऽप्रसिद्धयाऽव्याप्तिः स्यादेवेति भावः ।

जागदीशी

ननु प्रागुक्तस्यार्थस्य शब्दान्तरेणाभिधानमनुवादः, स चात्रासम्भवी, साध्यं यदधिकरणानधिकरणं तत्त्वानधिकरणत्वस्य, साध्यवद्भिन्नवृत्तित्वानधिकरणत्वस्य च प्रागुक्तस्य साध्यानधिकरणानधिकरणत्वशब्देनाबोधनादत आह— **चरमेति** ।

तत्त्वाधिकरणत्वाभावे तत्त्वाभावस्याप्रवेशाद्वैयर्थ्यमसम्भवीत्यत उक्तम्—**अनतिप्रयोजनकतयेति** । तथा च प्रकृतलक्षणवाक्यस्य-साध्यं यदधिकरणानधिकरणं तत्त्वाभावे, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभाव एव च तात्पर्यात् प्रागभिप्रेतार्थस्य शब्दान्तरेणाभिधानमेवानुवादः स चात्र सम्भवत्येवेति भावः ।

चन्द्रिका

ननु—साध्यासामानाधिकरण्यानधिकरणत्वस्य, साध्यवैयधिकरण्यानधिकरणत्वस्य च साध्यानधिकरणानधिकरणत्वशब्देनानभिधानाल्लक्षणद्वयस्यैकोक्तेरसम्भवेन तदुभयमपीति मूलोक्तिरसङ्गतेत्याशयेन शङ्कते—नन्विति ।

ननु साध्यं यदधिकरणानधिकरणं तत्त्वाधिकरणत्वाभावत्वस्य स्वसमानाधिकरण—प्रकृतसाध्यव्याप्यतावच्छेदकेन तादृशतत्त्वाभावत्वेन घटितत्वात्तत्राधिकरणत्वांशस्य वैयर्थ्यसम्भवेऽनतिप्रयोजनकत्वकथनमसङ्गतमित्यत आह—तत्त्वाधिकरणत्वाभाव इति । अखण्डाभावतया तादृशतत्त्वाधिकरणत्वाभावस्य तादृशतत्त्वाभावेनाघटितत्वात्तत्राधिकरणत्वांशस्य वैयर्थ्यासम्भवादनतिप्रयोजनकत्वोक्तिः सङ्गतेति भावः । चरमाधिकरणत्वांशस्य परित्यागेन लक्षणद्वयस्यैकार्थकत्वसम्भवेनैकोक्त्याऽनुवादसम्भव इत्याह—तथा चेति । एकार्थत्वप्रकारस्तु जागदीश्यामेव स्पष्टः ।

दीधितिः

साध्येत्यादेः—साध्यं यदधिकरणानधिकरणं तत्राभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः। तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या, नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकाधिकरणत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः।

जागदीशी

साध्यमित्यादि। साध्यानधिकरणानधिकरणेत्यादौ मध्यवर्तिनोऽपि नञो व्यत्यासेन चरमाधिकरणत्वांशेन सहान्वयादेव तल्लाभ इत्याशयः। केवलान्वयिनीति। अव्याप्तिरिति परेणान्वयः। अव्याप्तेर्हेतुमाह—साध्यनिष्ठेति। नानाव्यक्तिसाध्यके चेति मूलोक्तं धूमहेतुमभिप्रेत्य, तेन शब्दवान्गगनत्वादित्यादौ नानाव्यक्तिसाध्यकाव्याप्तिविरहेऽपि न क्षतिः।

चन्द्रिका

मूलस्थलक्षणद्वयस्य विवक्षितार्थो यथा साध्यानधिकरणानधिकरणपदेन लभ्यते तथाऽन्वयं प्रदर्शयति—साध्यानधिकरणेति। मध्यवर्तिनोऽपि नञ इति। तथा च साध्यानधिकरणेतिलक्षणघटकीभूतद्वितीयनञर्थस्य साध्यानधिकरणाधिकरणत्वेन सहान्वयेनोक्तलक्षणद्वयार्थो निष्पद्यत इति बोध्यम्।

केवलान्वयिनीतीति। प्रमेयं वाच्यत्वादित्यादौ साध्य ( प्रमेयत्व ) निष्ठा या आधेयता ( वृत्तिता ) तन्निरूपकत्वस्य सर्वत्र सत्त्वेन तदनिरूपकाधिकरणाप्रसिद्ध्याऽव्याप्तिरिति भावः। नानाव्यक्तिसाध्यके चेति दीधितिः मूलोक्तं पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थलं लक्षयति। तत्र च साध्य ( पर्वतीयवह्नि ) निष्ठाधेयत्वानिरूपकाधिकरणता महानसे, एवं साध्य ( महानसीयवह्नि ) निष्ठाधेयत्वानिरूपकाधिकरणत्वं पर्वते, तत्तद्वृत्तित्वस्यैव धूमे सत्त्वेन तदभावासत्त्वादव्याप्तिः। क्वचिदपि नानाव्यक्तिसाध्यकस्थलेऽव्याप्तिप्रसिद्ध्या सर्वत्र नानाव्यक्तिसाध्यकस्थलेऽव्याप्तिविरहेऽपि न क्षतिरित्याशयेनाह—तेनेति। अत्राव्याप्तिविरहश्च

दीधितिः

क्वचिद् व्यभिचारिण्यतिप्रसङ्गश्चाद्ये, द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवलान्वयिनि, यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः ।

जागदीशी

न्यूनतां परिहरति—क्वचिदिति । विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरित्यर्थः । विशिष्टधर्मावच्छिन्नाधिकरणत्वस्येव तदवच्छिन्नाधेयत्वस्यानतिरिक्तत्वादिति भावः ।

यत्किञ्चिदिति । साध्यवत्तत्तद्व्यक्तित्वावच्छिन्नभेद इत्यर्थः । नानाधिकरणसाध्यकेति । यत्र साध्यतावच्छेदकावच्छिन्नाधिकरणं नाना तत्रेत्यर्थः । तेन कस्याश्चिदपि वह्निव्यक्तेर्नानाधिकरणवृत्तित्वविरहेऽपि न वह्निसाध्यकधूमाद्यसंग्रहः । सर्वत्र = केवलान्वयिनि तद्भिन्ने च ।

चन्द्रिका

शब्दनिष्ठाधेयत्वानिरूपकाधिकरण ( भूतलादि ) वृत्तित्वाभावस्य गगनत्वे सत्त्वेन बोध्यः । यथा विशिष्टधर्मा ( विशिष्टसत्तात्वा ) वच्छिन्नाधिकरणत्वमतिरिक्तं तथा विशिष्टधर्मावच्छिन्नाधेयता नातिरिक्तेति व्यतिरेकितयाऽतिव्याप्तिं योजयति—विशिष्टधर्मावच्छिन्नेति ।

एवञ्चोभयसत्तानिष्ठाधेयताया ऐक्येन साध्य (विशिष्टसत्ता) निष्ठाधेयत्वानिरूपकाधिकरणत्वस्य सामान्यादावेव सत्त्वं न तु गुणकर्मणोः ( तत्र विशिष्टसत्तानिष्ठाधेयत्वाऽभिन्नशुद्धसत्तानिष्ठाधेयतानिरूपकाधिकरणत्वस्यैव सत्त्वात् ) तद्वृत्तित्वाभावस्य जातिरूपहेतौ सत्त्वेनातिव्याप्तिरिति भावः । दीधितौ द्वितीय इति । साध्यवैयधिकरण्यानधिकरणत्वमित्यत्रेति शेषः । साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदविवक्षणे केवलान्वयि ( प्रमेयत्वादि ) साध्यकस्थले—प्रमेयत्ववत्त्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्याऽव्याप्तिः । यत्किञ्चित्साध्यवद्व्यक्तिभेदविवक्षणे नानाधिकरण-

दीधितिः

केचित्तु—साध्यासामानाधिकरण्यं—हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणाभिन्नत्वमर्थः ।

जागदीशी

सार्वभौममतमुत्थापयति—केचित्त्विति । हेत्वधिकरण इति सप्तम्यर्थोऽवच्छेद्यत्वं, तच्च साध्यवद्वृत्तित्वाभावेऽन्वितम् । तेनैवेति । हेतुतावच्छेदकसम्बन्धेनैवेत्यर्थः । तस्य च साध्यवद्वृत्तित्वेन सहान्वयः ।

साध्यवत्त्वमपि येन सम्बन्धेन येन रूपेण साध्यता तत्सम्बन्धेन तद्रूपावच्छिन्नवत्त्वं बोध्यम् । तेन समवायेन वह्नेः साध्यत्वे धूमे, विशिष्टसत्त्वसाध्यके सत्त्वादौ च नातिव्याप्तिः ।

चन्द्रिका

साध्यके वह्निमान् धूमादित्यादौ, वाच्यं ज्ञेयत्वादित्यादौ च यत्किञ्चित्साध्यवत्पर्वतव्यक्तिभेदमादायाव्याप्तिरिति बोध्यम् ।

सार्वभौममतेन साध्यासामानाधिकरण्यमित्यस्यार्थं प्रदर्शयन् प्रथमलक्षणार्थमाह दीधितौ—हेतुतावच्छेदकसम्बन्धेनेत्यादि । लक्षणसमन्वयश्च वह्निमान् धूमादित्यादौ—हेतुतावच्छेदक ( संयोग ) सम्बन्धेन हेत्व ( धूमा ) धिकरणे ( पर्वतादौ ) हेतुतावच्छेदकसंयोगसम्बन्धेन साध्यव (वह्निम) त्पर्वतादिवृत्तित्वाभावो न धूमहेतौ, तत्र तस्य सत्त्वात् किन्तु घटादावेव, तादृशघटादिभिन्नत्वस्य धूमादौ सत्त्वाद्बोध्यः । नातिव्याप्तिरिति । लक्षणघटकीभूतसाध्यवद्वृत्तित्वेत्यत्र साध्यवत्त्वं साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकधर्मावच्छिन्नवत्त्वं ग्राह्यम्, अन्यथा समवायेन वह्निसाध्यकधूमे, विशिष्टसत्त्वसाध्यकसत्त्वादौ चातिव्याप्तिः । तथा हि—हेतुतावच्छेदक ( संयोग ) सम्बन्धेन हेत्वधिकरणे ( पर्वते ) संयोगसम्बन्धेन साध्यवत् ( पर्वत ) निरूपितवृत्तित्वाभावो न धूमे किन्तु घटादावेव तद्भिन्नत्वस्य धूमे हेतौ सत्त्वेनातिव्याप्तिः । एवं ( विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्येन ) हेतुतावच्छेदकसमवायसम्बन्धेन हेत्वधिकरणगुणादौ तादृशसमवायेन साध्यविशिष्टसत्ताभिन्नशुद्धसत्तावद्वृत्तित्वाभावस्य सामान्यत्वादावेव सत्तया तद्भिन्नत्वं

दीधितिः

**तेन धूमस्य स्वावयवे संयोगेन, वह्निमति च समवायेनावृत्तावपि न क्षतिः।**

जागदीशी

**तदधिकरणभिन्नत्वमिति।** तदत्यन्ताभाववत्त्वोक्तौ द्रव्यं सत्त्वादित्यादावतिव्याप्तिः। गुणाद्यवच्छेदद्रव्यवृत्तित्वाभावस्यैव द्रव्यावच्छेदेन सत्तायामभावसत्त्वादतो भिन्नत्वपर्यन्तानुसरणम्। भेदस्तु नाव्याप्यवृत्तिः, तदव्याप्यवृत्तित्वे तु तादृशवृत्तित्वाभाववती यावती व्यक्तिस्तत्तद्भेदकूटवत्त्वम् वक्तव्यमिति भावः।

हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरण इत्यस्य फलमाह—**स्वावयवे संयोगेनेति।** अवृत्तावपि न क्षतिरित्यन्वयः। तथा च तादृशसम्बन्धेन हेत्वधिकरणत्वाप्रवेशे स्वावयवावच्छेदेन धूमस्य वह्निमत्संयुक्तत्वाभाव-

चन्द्रिका

सत्त्वरूपहेतोरित्यतिव्याप्तिः। तदधिकरणभिन्नत्वविवक्षणबीजं स्फोटयितुमाह—तदत्यन्ताभावेति। तदत्यन्ताभाववत्त्वोक्तौ द्रव्यं सत्त्वादित्यत्रातिव्याप्तिस्स्यात्तथा हि—गुणावच्छेदेन गुण एव सत्त्वस्य वृत्तित्वं न तु द्रव्यादाविति हेतुतावच्छेदकसमवायसम्बन्धेन हेत्वधिकरणगुणावच्छेदेन साध्य (द्रव्यत्व) वद्वृत्तित्वाभावस्य द्रव्यावच्छेदेन सत्त्वे हेतावभावसत्त्वेनातिव्याप्तिरिति तदधिकरणभिन्नत्वानुसरणम्। तदनुसरणे च व्याप्यवृत्तिभेदस्यावच्छेदकासम्भवेन हेत्वधिकरणगुणावच्छेदेन साध्य (द्रव्यत्व) वद्वृत्तित्वाभावाधिकरणत्वं सत्तायां न तु तद्भेदस्तत्रेति नातिव्याप्तिः।

भेदस्याव्याप्यवृत्तित्वे तु हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभाववती, यावती व्यक्तिस्तत्तद्भेदकूटवत्वं लक्षणं वाच्यम्, तथा च हेत्वधिकरणगुणावच्छेदेन द्रव्यत्ववद्वृत्तित्वाभावस्य सत्तायां सत्त्वेन तद्भिन्नत्वं सत्तायामसम्भवीति नातिव्याप्तिः। हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणस्याविवक्षायां दोषमाह—तथा चेति। वह्निमान् धूमादित्यत्र हेतुतावच्छेदकसंयोगसम्बन्धातिरिक्तसमवायसम्बन्धेन हेत्वधिकरण—

जागदीशी

वत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः स्याद्, न पुनरसम्भवः, इदं वाच्यं ज्ञेयत्वादित्यादावेव लक्षणसम्भवादिति भावः। अत्र चोत्पत्ति-कालावच्छिन्ने घटे पृथिवीत्वे रूपवद्वृत्तित्वं नेत्यादिप्रतीत्या घटाद्यवच्छेदेन पृथिवीत्वादौ रूपवद्वृत्तित्वाभावाभ्युपगमे हेत्वधिकरणनिष्ठमवच्छेदकत्वं निरवच्छिन्नं ग्राह्यम्।

तेन रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः, तत्र घटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादिति ध्येयम्। तेनैवेत्यस्य फलमाह—**वह्निमति च समवायेनेति।** हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वानुक्तौ

चन्द्रिका

धूमावयवावच्छेद्यसाध्यव ( वह्निम ) त्संयुक्तत्वाभावस्य धूमे सत्त्वात् तद्भिन्नत्वस्य धूमे हेतावसत्त्वेनाव्याप्तिरिति भावः। ननु हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणाविवक्षणे सर्वत्र सद्धेतौ सम्बन्धान्तरेण हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभावस्य हेतौ सत्त्वेनासम्भवस्यैव वक्तुमुचितत्वादव्याप्तिकथनं न युक्तमित्यत आह—इदं वाच्यमिति। तथा चेदं वाच्यं ज्ञेयत्वादित्यत्र येन केनापि सम्बन्धेन हेत्व (ज्ञेयत्वा) धिकरणपटाद्यवच्छेदेन साध्य ( वाच्यत्व ) वद्वृत्तित्वाभावस्य ज्ञेयत्वेऽसत्त्वेन घटत्वादावेव सत्त्वेन च तद्भिन्नत्वस्य ज्ञेयत्वहेतौ सत्त्वान्नाव्याप्तिरिति न सर्वत्र लक्षणासत्त्वमित्यसम्भवासम्भवेनाव्याप्तिरुक्तेति हृदयम्। निरवच्छिन्नहेत्वधिकरणनिष्ठावच्छेदकतायाः लाभाय भूमिकामारचयति—अत्र चेत्यादिना। अन्यथा रूपवान्पृथिवीत्वादित्यत्र हेतुतावच्छेदकसमवायसम्बन्धेन हेत्व ( पृथिवीत्वा ) धिकरणे घटादावुत्पत्तिकालावच्छेदेन रूपस्यासत्त्वेन पृथिवीत्वाधिकरणोत्पत्तिकालावच्छिन्नघटाद्यवच्छेद्यस्य साध्य ( रूप ) वद्वृत्तित्वाभावस्य पृथिवीत्वे हेतौ सत्तया तद्भिन्नत्वस्य तत्रासत्त्वेन चाव्याप्तिः। निरवच्छिन्नहेत्वधिकरणनिष्ठावच्छेदकताग्रहणे तु घटादिरूपहेत्वधिकरणनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदान्निरवच्छिन्नहेत्वधिकरण (घटा) द्यवच्छेदेन साध्यवद्वृत्तित्वाभावस्य गुणत्वादावेव सत्त्वेन तद्भिन्नत्वस्य पृथिवीत्वे सत्त्वाल्लक्षणसमन्वयः। लक्षणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वस्याप्रवेशे दोषमाह—हेतुतावच्छेदकसम्बन्धेनेति। तथा च हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वानुक्तौ सम्बन्धसामान्येन, यत्किञ्चित्सम्बन्धेन वा तद्वक्तव्यम्। तत्र सम्बन्धसामान्यप्रवेशे

दीधितिः

## तादृशाभावश्च सम्बन्धान्तरेण तत्रैव वर्तमाने सुलभः ।

जागदीशी

सम्बन्धसामान्येन हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वसामान्याभावो न निवेश्यः, साधनाधिकरणावच्छेद्यतादृशाभावस्याप्रसिद्धेः, किन्तु यत्किञ्चित्सम्बन्धेन साध्यवद्वृत्तित्वाभावः प्रवेशनीयः ।

तथा च हेत्वधिकरणपर्वताद्यवच्छेदेन धूमादौ वह्निमत्समवेतत्वाद्यभावसत्त्वादसम्भव एव स्यात्, यदि तेनैव सम्बन्धेन साध्यवद्वृत्तित्वप्रवेशो न स्यादिति भावः । ननु हेत्वधिकरणावच्छेद्यत्वविशिष्टसाध्यवद्वृत्तित्वाभावस्याधिकरणाप्रसिद्धया लक्षणमिदमसम्भवि, तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकतया गगनजलत्वादौ वह्निमत्पर्वतसंयुक्तत्वाभावस्य धूमवत्पर्वतानवच्छेद्यत्वादत आह—तादृशाभावश्चेति । हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभावश्चेत्यर्थः । सम्बन्धान्तरेण=हेतुताव-

चन्द्रिका

हेत्वधिकरणावच्छेद्यसाध्यवन्निरूपितसम्बन्धसामान्यावच्छिन्न वृत्तित्वसामान्याभावस्याप्रसिद्धिः, कालिकसम्बन्धेन पदार्थमात्रस्य साध्यवति पर्वतादौ वृत्तेः, सम्बन्धसामान्यावच्छिन्नसाध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणावच्छेद्यत्वासम्भवाद्वेत्याशयेनाह—सम्बन्धसामान्येनेति । यत्किञ्चित्सम्बन्धेन साध्यवद्वृत्तित्वोक्तावसम्भवमाह– तथा चेत्यादिना ।

हेत्वधिकरणपर्वताद्यवच्छेदेन समवायेन साध्यव ( वह्निम ) द्वृत्तित्वाभावो धूम एव तद्भिन्नत्वं न धूम इति सर्वत्र सद्धेतौ यत्किञ्चित्सम्बन्धेन साध्यवद्वृत्तित्वाभावस्य हेतावेव सत्त्वेनासम्भवमिया हेतुतावच्छेदकसम्बन्धेनैव साध्यवद्वृत्तित्वं वाच्यमिति भावः । असम्भवीति । अयमाशयः—हेत्वधिकरणावच्छेदेन साध्यवद्वृत्तित्वाभावस्याधिकरणाप्रसिद्धयाऽसम्भवः, तथा हि—हेत्वधिकरणा (पर्वताद्य) वच्छेदेन साध्यव ( वह्निम ) न्निरूपितवृत्तित्वाभावो घटत्वादौ, घटत्वादिनिष्ठतादृशवृत्तित्वाभावस्य घटत्वाद्यधिकरणमेवावच्छेदकं, न तु हेत्वधिकरणं पर्वतादि, यत्र यो वर्तते तस्याधिकरणमेव तस्यावच्छेदकं भवतीति नियमादिति सर्वत्र सद्धेतौ

जागदीशी

च्छेदकसम्बन्धान्यसम्बन्धेन । तथा च हेतुमत्पर्वताद्यवच्छेद्यत्वविशिष्टस्य वह्निमत्संयुक्तत्वाद्यभावस्याधिकरणत्वं पर्वतीयरूपादावेव प्रसिद्धमिति भावः । यद्यपि रूपादौ वह्निमत्संयुक्तत्वाद्यभावस्य व्याप्यवृत्तित्वात्तत्र पर्वतादिकं नावच्छेदकं, भावाभावयोरेकत्र वृत्त्यर्थमेवावच्छेदकत्व-स्वीकारादित्यप्रसिद्धितादवस्थ्यम् । न च महानसादिसंयुक्ते कालिकादि-सम्बन्धेन पर्वतादिनिष्ठघटादौ वह्निमत्संयुक्तत्वाभावस्य पर्वताद्यवच्छे-द्यत्वप्रसिद्ध्या न दोष इति वाच्यम् , इत्थमपि तद्रूपवान् तद्रसादित्या-दौ तद्रसाधिकरणावच्छेदेन तद्रूपवत्समवेतत्वाभावस्याप्रसिद्धेर्दुर्वार-त्वात् । तथापि पर्वतावच्छेदेन तदीयरूपे न वह्निमत्संयुक्तत्वमित्यादि-

चन्द्रिका

लक्षणानागमनेनासंभवो बोध्य इति । तथा चेति । हेत्वधिकरणावच्छेदेन साध्य-वद्वृत्तित्वाभावस्य गगनजलत्वादावप्रसिद्धत्वेऽपि हेत्व ( धूमा ) धिकरणपर्वतावच्छेदेन हेतुतावच्छेदक ( संयोग ) सम्बन्धेन साध्यव ( वह्निम ) न्निरूपितवृत्तित्वाभावः पर्वतीयरूपादौ प्रसिद्ध इत्याशयः । ननु स्वाभावसामानाधिकरण्यरूपाव्याप्यवृत्ति-त्ववत एव पदार्थस्य कुत्रापि केनचिद्देशावच्छेदेन वृत्तित्वं केनचिच्च नेति तद-धिकरणस्यैवावच्छेदकस्वीकारो न तु व्याप्यवृत्तिरूपाद्यधिकरणस्येति कथं हेत्व-धिकरणपर्वतावच्छेदेन वह्निमत्संयुक्तत्वाभावः पर्वतीयरूपादौ स्यात् , तत्र तस्य व्याप्यवृत्तित्वादित्याशयेन शङ्कते—यद्यपीति । संयोगेन महानसे, कालिकेन च पर्वते वर्त्तमाने घटादौ महानसावच्छेदेन वह्निमत्संयुक्तत्वस्य पर्वतावच्छेदेन च वह्निमत्संयुक्तत्वाभावस्य प्रसिद्धया न दोष इत्यभिप्रायेणाह—न चेति । इत्थमपि = हेत्वधिकरणावच्छेदेन साध्यवद्वृत्तित्वाभावस्योक्तयुक्त्या प्रसिद्धत्वेऽपि । तद्रूपवान्तद्-रसादित्यत्र तद्रूपवत्समवेतत्वतदभावयोरेकत्राप्रसिद्धया घटत्वादौ तद्रूपवत्समवे-तत्वाभावस्य व्याप्यवृत्तितया तद्रसाधिकरणावच्छेद्यतद्रूपवत्समवेतत्वाभावा-प्रसिद्धयाऽव्याप्तिः स्यादेवेति भावः । यथा अव्याप्यवृत्तिकपिसंयोगादेः शाखामूलादिदेशभेदावच्छेदेन वृत्तौ भावाभावयोः प्रतीतिबलादेव देशभेदादिरूपा-वच्छेदकं स्वीक्रियते तथा व्याप्यवृत्तिपदार्थानामपि पर्वतावच्छेदेन पर्वतीयरूपे न वह्निमत्संयुक्तत्वमिति प्रतीत्याऽवच्छेदकमङ्गीकर्त्तव्यमित्याशयेनाह—तथापीति ।

जागदीशी

प्रतीत्या व्याप्यवृत्तेरवच्छेदकस्वीकारादित्थमभिधानम् । हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वे वा ग्रन्थतात्पर्यम् । तथा च व्याप्यवृत्तेरवच्छेदकासत्त्वेऽपि साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं ( साधनाधिकरणं ) तद्भिन्नत्वमादायैव लक्षणसङ्गतिः ।

न च वस्तुगत्या साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वोक्तौ वह्निमान्धूमादित्यादावव्याप्तिः, स्वावयवावच्छेदेन वह्निमत्संयुक्तत्वाभाववतो धूमस्याधिकरणतायाः साधनवत्पर्वतादौ सत्त्वात् । साध्यवद्वृत्तित्वाभावविशिष्टयद्व्यक्तित्वावच्छिन्नाधिकरणत्वं

चन्द्रिका

तथा च तद्रसाधिकरणावच्छेदेन ( तद्रसाधिकरणे कालिकेन वर्तमाने ) घटत्वादौ न तद्रूपवत्समवेतत्वमित्यादिप्रतीत्या तद्रसाधिकरणावच्छेद्यतद्रूपवत्समवेतत्वाभावस्य प्रसिद्धत्वात् तद्रूपवान् तद्रसादित्यादावपि लक्षणसमन्वयः ।

व्याप्यवृत्तेरवच्छेदकास्वीकारेऽप्याह—हेतुतावच्छेदकसम्बन्धेनेति । तथा च हेतुतावच्छेदक ( संयोग ) सम्बन्धेन साध्यव ( वह्निम ) द्वृत्तित्वाभावविशिष्टस्य ( पर्वतीयरूपरसादेः ) अधिकरणं हेत्व ( धूमा ) धिकरणं तदन्यत्वं ( तादृशरूपरसाद्यन्यत्वं ) धूमादाविति लक्षणसमन्वयः ।

वस्तुतः साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वमिति लक्षणस्वरूपत्वेऽव्याप्तिमाह—न चेति । अव्याप्तिं योजयति—स्वावयवावच्छेदेनेति । अत्र स्वपदेन धूमो ग्राह्यस्तथा च-स्वा ( धूमा ) वयवावच्छेदेन धूमे साध्यव ( वह्निम ) त्संयुक्तत्वाभावो वर्तते तस्या ( धूमस्या ) धिकरणं पर्वत इति तदन्यत्वस्य धूमेऽसत्त्वेनाव्याप्तिरिति भावः ।

अथैतादृशाव्याप्तिवारणं साध्यवद्वृत्तित्वाभावविशिष्टयद्व्यक्तित्वावच्छिन्नाधिकरणत्वं हेतुमतस्तदन्यत्वोक्तौ सम्भवति, तथा हि स्वावयवावच्छेदेन वह्निमद्वृत्तित्वाभावविशिष्टयद् ( महानसीयधूम ) व्यक्तित्वावच्छिन्नाधिकरणत्वं हेत्वधिकरणस्य ( महानसस्य ) तद् ( महानसीयधूम ) व्यक्त्यन्यत्वं पर्वतीयधूमे, एवं यद्व्यक्तिपदेन पर्वतीयधूमग्रहणे महानसीयधूमे लक्षणसमन्वय इति. सर्वत्र सद्धेतौ लक्षण-

जागदीशी

हेतुमतस्तदन्यतोक्तौ तु वह्निमान् धूमाद्, इदं वाच्यं ज्ञेयत्वादित्यादौ सर्वत्रैवासम्भवः। साध्यवदसंयुक्तत्वादिविशिष्टतत्तद्रूपादिव्यक्तित्वस्य गुरुतया (प्रमेयरूपत्वावच्छिन्नायाः प्रतियोगिताया इव) तदवच्छिन्नाधिकरणत्वाप्रसिद्धेः, केवलस्यातिप्रसङ्ग एव विशिष्टधर्मस्याधिकरणतानिरूपकतावच्छेदकत्वकल्पनादिति वाच्यम्। सार्वभौमानां मते प्रतियोगिताया इवाधिकरणताया अपि गुरुधर्मावच्छेद्यत्वोपगमात्। अन्यथा समवेतत्वमपेक्ष्य सत्तावत्समवेतत्वस्य गुरुतया साध्यवद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या सत्तावान्द्रव्यत्वादित्यादावव्याप्तिप्रसङ्गात्।

चन्द्रिका

समन्वयः स्यादिति चेत्तत्राह—वह्निमान्धूमादिति। तथा सति वह्निमान्धूमात् वाच्यं ज्ञेयत्वादित्यादावसम्भव एव स्यादिति भावः।

असम्भवं योजयति—साध्यवदसंयुक्तत्वादीति। शुद्धतद्व्यक्तित्वापेक्षया साध्यवत्संयुक्तत्वाभावविशिष्टतद् (महानसीयधूमादि) व्यक्तित्वस्य गुरुतया तादृशव्यक्तित्वावच्छिन्ननिरूपकताकाधिकरणत्वाऽप्रसिद्ध्याऽसम्भव इति भावः। ननु सर्वत्र गुरुधर्मावच्छिन्नाधिकरणत्वाप्रसिद्धौ पीतघटवति नीलघटत्वावच्छिन्नाधिकरणत्वाभावो न सिद्ध्येदत आह—केवलस्येति। तथा च यत्र केवलस्या (लघुधर्मस्या) वच्छेदकत्वे अतिप्रसङ्गस्तत्रैव विशिष्टधर्मस्याधिकरणतानिरूपकतावच्छेदकत्वमङ्गीकर्तव्यम्—यथा नीलघटत्वापेक्षया लघुधर्मस्य घटत्वस्य तादृशावच्छेदकत्वे स्वीकृते पीतघटवति नीलघटत्वावच्छिन्नाधिकरणत्वाभावो न प्रतीयेतेत्यतिप्रसङ्गभिया नीलघटत्वस्य गुरुधर्मस्यापि तादृशावच्छेदकत्वं सिद्ध्यति, न तु प्रमेयघटत्वस्य, तदपेक्षया शुद्धघटत्वस्य लघुधर्मस्यावच्छेदकत्वेऽप्यतिप्रसङ्गाभावात्। एवं प्रकृतेऽपि (अतिप्रसङ्गाद्यनापादके सम्भवति लघौ धर्मे गुरौ तदभावादिति न्यायेन) साध्यवदसंयुक्तत्वादिविशिष्टतद्व्यक्तित्वापेक्षया शुद्धतद्व्यक्तित्वस्य लघुत्वेनावच्छेदकत्वमिति भावः। कम्बुग्रीवादिमान्नास्तीति प्रतीतिबलात् कम्बुग्रीवादिमत्त्वरूपगुरुधर्मावच्छिन्नप्रतियोगितेव गुरुधर्मावच्छिन्नाधिकरणताऽपि सार्वभौममतेन स्वीक्रियत इत्याशयेनाह—सार्वभौमानां मत इति। अत्रैव प्रमाणं दर्शयति—अन्यथेति। तथा च गुरुधर्मस्यावच्छेदकत्वानङ्गीकारे समवेतत्वापेक्षया सत्ताव-

दीधितिः

व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्वम्। सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्य-

जागदीशी

ननु साध्यसामानाधिकरण्यवतो न तदभाववत्त्वमतो द्रव्यं सत्त्वादित्यादौ व्यभिचारिण्यतिप्रसङ्ग इत्यत आह—व्यभिचारिण-स्त्विति। तादृशीति। हेतुताघटकसम्बन्धेन हेतुमतीत्यर्थः। तादृशा-भाववत्त्वम्=साध्यवद्वृत्तित्वाभाववत्त्वम्। अत्रैवानुभवं प्रमाणयति—सत्तायामित्यादि। एवम्=सत्तायामपि द्रव्यत्वसामानाधिकरण्य-विरहे।

चन्द्रिका

त्समवेतत्वस्य गुरुतया हेत्वधिकरणद्रव्यावच्छेदेन साध्य (सत्ता) वत्समवेतत्वा-वच्छिन्नप्रतियोगिताकाभावाप्रसिद्धया तदधिकरणभिन्नत्वस्याप्यप्रसिद्धिरित्यव्याप्तिः। गुरुधर्मस्यावच्छेदकत्वस्वीकारे तु हेत्वधिकरणद्रव्यावच्छेदेन साध्य (सत्ता) वत्समवेतत्वाभावो गुणत्वादौ तद्भिन्नत्वस्य द्रव्यत्वे हेतौ सत्त्वेन सत्तावान्द्रव्यत्वादि-त्यत्र नाव्याप्तिरिति बोध्यम्।

साध्यसामानाधिकरण्यवतः=साध्याधिकरणवृत्तिहेतोः। न तदभाववत्त्वम्—न साध्याधिकरणवृत्तित्वाभाववत्त्वम्। तथा च द्रव्यं सत्त्वादित्यत्र साध्य (द्रव्यत्व) वद्वृत्तित्वाभावो न सत्त्वे हेतौ किन्तु सामान्यत्वादावेवेति तद्भिन्नत्वं सत्त्वे हेता-वित्यतिव्याप्तिस्तन्निरासायाह—व्यभिचारिणस्त्विति। एवञ्च व्यभिचारनिरूप-काधिकरणगुणाद्यवच्छेदेन साध्य (द्रव्यत्व) वद्वृत्तित्वाभावः सत्तायामिति तद् (सत्ता) भिन्नत्वं न सत्तायामिति नातिव्याप्तिरिति भावः। ननु गुणाद्यवच्छेदेन सत्तायां द्रव्यत्ववद्वृत्तित्वाभाव इत्यत्र किं प्रमाणमित्यत आह—अत्रैवेति। अनुभव एव प्रमाणमित्याशयः।

दीधितिः

मित्यनुभवात्। न चैवं गुणकर्मान्यत्वविशिष्टसत्त्वेऽव्याप्तिः, विशिष्टस्यातिरिक्तत्वात्।

जागदीशी

**विशिष्टसत्त्व इति।** विशिष्टसत्त्वशब्दबोध्यहेतावित्यर्थः। यथाश्रुते गुणकर्मान्यत्वविशिष्टसत्तायां सत्ताव्यक्तावव्याप्त्याशङ्कायामुत्तरग्रन्थेन तदनिरासादसङ्गत्यापत्तेः। **अतिरिक्तत्वादिति।** विशेष्यविशेषणाभ्यां भिन्नत्वादित्यर्थः। तथा च गुणादिकं न हेत्वधिकरणमतो नाव्याप्तिः। उभयत्वमप्येकविशिष्टापरत्वमेव, तच्चातिरिक्तमेव, नातः स्पर्शवान् मूर्तत्वभूतत्वोभयस्मादित्यादावव्याप्तिरिति भावः।

चन्द्रिका

ननु सत्तायां द्रव्यत्वसामानाधिकरण्याभावसत्त्वे द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टशुद्धसत्तयोरैक्येन हेत्वधिकरणगुणावच्छेदेन साध्य ( द्रव्यत्व ) वद्वृत्तित्वाभावस्य सत्तायामङ्गीकारे तदभिन्नविशिष्टसत्त्वेऽपि तस्य दुर्वारतया तद्भिन्नत्वं न विशिष्टसत्त्वे हेतावित्यव्याप्तिरिति चेत्तत्राह दीधितौ—विशिष्टस्येति। विशिष्टसत्त्वशब्दबोध्यहेतावित्यस्य विशिष्टहेतुमात्रेऽव्याप्तिर्विवक्षितेत्यभिप्रायः, अन्यथा ( विशिष्टसत्तामात्रेऽव्याप्तिविवक्षणे ) विशिष्टसत्त्वस्यातिरिक्तत्वादित्येव लिखेद्दीधितिकारो न तु विशिष्टस्यातिरिक्तत्वादिति। विशिष्टस्यातिरिक्तत्वे च शुद्धविशिष्टसत्त्वयोरैक्याऽसम्भवेन द्रव्यत्ववद्वृत्तित्वाभावो न विशिष्टसत्तायामिति नाव्याप्तिरिति भावः।

नन्वेवमपि स्पर्शवान् मूर्तत्वभूतत्वोभयस्मादित्यत्राकाशावच्छेदेन स्पर्शवद्वृत्तित्वाभावो मूर्तत्वभूतत्वोभयस्मिन् वर्तत इति तद्भिन्नत्वं न मूर्तत्वभूतत्वोभयरूपहेतावित्यव्याप्तिरिति चेदत आह—उभयत्वमपीति। तथा च मूर्तत्वविशिष्टभूतत्वस्य केवलभूतत्वादतिरिक्ततया हेत्वधिकरणं पृथिव्यादिचतुष्टयमेव तदवच्छेदेन साध्यवद्वृत्तित्वाभावो गगनत्वादौ तद्भिन्नत्वं मूर्तत्वभूतत्वोभयस्मिन्निति नाव्याप्तिरिति भावः। अथ हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेन साध्यवद्वृत्तित्वाभावोक्तावपि हेतुतावच्छेदक ( विशिष्टसत्तात्व ) विशिष्टहेत्वधिकरण ( द्रव्या )

## जागदीशी

यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेनेत्युक्तावपि विशिष्टसत्तादिहेतौ नाव्याप्तिः। न च धूमाधिकरणमहानसाद्यवच्छेदेन पर्वतीयादिधूमे वह्निमत्संयुक्तत्वाभावस्य (चालनीन्यायेन) सत्त्वादव्याप्तिः, महानसादेरपि कालिकादिसम्बन्धेन पर्वतीयधूमाधिकरणत्वात् तत्र साध्यवद्वृत्तित्वाभाववत्तायामवच्छेदकत्वादिति वाच्यम्, स्वावच्छिन्नाधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभाववदवृत्तिधर्मवत्त्वमित्यस्यैव फलितार्थस्य तत्तद्धूमत्वधर्ममादायैव धूमादौ लक्षणसम्भवेन धूमत्वस्य हेतुतानवच्छेदकत्वेऽपि क्षत्यभावात्। तथापि विशिष्टस्यातिरिक्तत्वात्तत एवाव्याप्तिवारणसम्भवे हेतुतावच्छेदकावच्छिन्नाधिकरणत्वप्रवेशे गौरवम्, असम्भवो वा, विशिष्टनिरूपिताधिकरणत्वाऽप्रसिद्धेः। एवं धूमत्वादेर्व्याप्यतानवच्छेदकत्वे ताद्रूप्येण कथायां हेतोरुप-

## चन्द्रिका

वच्छेदेन द्रव्यत्ववद्वृत्तित्वाभावस्य विशिष्टसत्त्वे विरहेण द्रव्यं विशिष्टसत्त्वादित्यत्र पूर्वोक्ताऽव्याप्तिविरहे किमर्थं विशिष्टस्यातिरिक्तत्वस्वीकरणमित्याशयेनाह—यद्यपीति। संयोगेन पर्वतवृत्तिधूमस्यापि कालिकेन महानसादिवृत्तित्वमिति हेत्वधिकरणमहानसावच्छेदेन साध्यव (वह्निम) त्संयुक्तत्वाभावः पर्वतीयधूमे, एवं महानसीयधूमादावपि विद्यत इत्यव्याप्तिमाशङ्कते—न चेति। स्वावच्छिन्नेति। अत्र स्वपदवाच्यं पर्वतीयधूमत्वादिकम्, एवञ्च स्वावच्छिन्नाधिकरणपर्वतावच्छेद्यसाध्यव (वह्निम) द्वृत्तित्वाभावो महानसीयधूमे तदवृत्तिधर्मः=पर्वतीयधूमत्वं तद्वत्त्वं पर्वतीयधूम एवं महानसीयादिधूमेऽपीति लक्षणसमन्वयः। ननु लक्षणे हेतुतावच्छेदकावच्छिन्नत्वप्रवेशापेक्षया विशिष्टस्यातिरिक्तत्वाभ्युपगमस्यैव गौरवाधायकत्वमित्यत आह—असम्भवो वेति।

असम्भवं योजयति—विशिष्टेति। तथा च हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणावच्छेद्यत्वविशिष्टसाध्यवद्वृत्तित्वाभावत्वस्य हेत्वधिकरणावच्छेद्यत्वविशिष्टसाध्यवद्वृत्तित्वाभावत्वापेक्षया गुरुतया तदवच्छिन्नाधिकरणत्वाप्रसिद्धयैवासम्भवसम्भव इति भावः। यथा गुणावच्छेदेन द्रव्यत्ववद्वृत्तित्वाभावः सत्तायामित्यत्रानुभवः

जागदीशी

न्यासो न स्यादित्याशयः । ननु विशिष्टसत्त्वस्यातिरिक्तत्वे मानाभावः । न च गुणो विशिष्टसत्तावानिति प्रतीत्यभाव एव मानम्, गुणस्य विशिष्टनिरूपिताधिकरणत्वविरहादेव तादृशप्रतीत्यसम्भवात् । न च विशिष्टनिरूपितमधिकरणत्वं यद्यतिरिक्तं तदा विशिष्टमेवातिरिक्तमस्तु, विशिष्टाधिकरणतायाः क्लृप्ताधिकरणतास्वरूपत्वाभ्युपगमात् । किञ्च विशिष्टस्यातिरिक्तत्वे द्रव्यं विशिष्टसत्तावदिति निर्णयदशायामपि द्रव्यं न सत्तावदिति प्रत्ययप्रसङ्गः, सत्ताऽभावबुद्धिं प्रति सत्तानिश्चयस्यैव विरोधितया तदसत्त्वात् । स्वातन्त्र्येण विरोधितान्तरकल्पने गौरवात् ।

एवं विशेषणविशेष्योभयग्राहकसामग्रीविरहेऽपि विशिष्टग्रहप्रसङ्गः । तदुभयग्राहकसामग्र्या विशिष्टग्रहे हेतुत्वकल्पने गौरवान्तरं स्फुटमेवेत्यत

चन्द्रिका

प्रमाणं तथा विशिष्टसत्त्वस्यातिरिक्तत्वे नास्ति किमपि मानमित्याशयेनाह—नन्विति । विशिष्टनिरूपितेत्यस्य—विशिष्टसत्तानिरूपितेत्यर्थः । तादृशप्रतीतीत्यस्य—गुणो विशिष्टसत्तावानिति प्रतीतीत्यर्थः । तथा च गुणे विशिष्टसत्तानिरूपिताधिकरणत्वविरहादेव गुणो विशिष्टसत्तावानिति प्रतीतिविरहो न तु विशिष्टसत्त्वस्यातिरिक्ततयेत्याशयः । दोषान्तरमाह—किञ्चेति । शुद्धविशिष्टसत्तयोरतिरिक्तत्वे द्रव्यं विशिष्टसत्तावदिति निश्चयः द्रव्यं न विशिष्टसत्तावदिति निश्चयमेव प्रतिबध्नीयान्न तु द्रव्यं न सत्तावदिति निश्चयम् । एवं सति द्रव्यं विशिष्टसत्तावदिति निश्चयकालेऽपि द्रव्यं न सत्तावदिति प्रत्ययः स्याद्यतः शुद्धप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभावबुद्धिम्प्रति शुद्धप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनिश्चयस्यैव प्रतिबन्धकत्वेन सत्ताऽभाववत्ताबुद्धिं प्रति न विशिष्टसत्तावत्त्वनिश्चयस्य विरोधित्वमित्याशयेनाह—सत्ताऽभावबुद्धिम्प्रतीति । तदसत्त्वात्=सत्तानिश्चयस्यासत्त्वात् ।

ननु सत्ताऽभाववत्ताबुद्धिं प्रति विशिष्टसत्तावत्त्वनिश्चयत्वेनापि पृथक् प्रतिबन्धकताकल्पनेनादोष इति चेत्तत्राह—स्वातन्त्र्येणेति । पृथक् प्रतिबन्धकत्वकल्पनमेव गौरवमिति बोध्यम् । विशिष्टस्य विशेष्यविशेषणोभयस्वरूपातिरिक्तत्वे विशिष्टज्ञानं प्रति विशेष्यविशेषणोभयज्ञानजनकसामग्र्या नैरपेक्ष्येण तदुभयग्राहकसामग्रीविरहेऽपि विशिष्टज्ञानप्रसङ्ग इत्यभिप्रायेणाह—एवमिति । तदुभयग्राहकेति—विशेषण-

दीधितिः

अनतिरिक्तत्वे तु विशेषणविशेष्यसम्बन्धस्यैव परम्परया

जागदीशी

आह—अनतिरिक्तत्वे त्विति । गुरवस्तु—विशिष्टस्यातिरिक्तत्वादिति ग्रन्थस्य विशिष्टनिरूपिताधिकरणत्वस्यातिरिक्तत्वादित्यर्थः । तथा च हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेन तादृशवृत्तित्वाभाववत्त्वमपि निवेश्यमतो नाव्याप्तिरित्याशयः । ननु विशिष्टाधिकरणत्वं यदि नातिरिक्तं ; विशिष्टसत्तावानिति प्रतीतेः प्रत्येकनिरूपिताधिकरणताद्वयावगा-

चन्द्रिका

विशेष्योभयग्राहकेत्यर्थः । अनतिरिक्तत्वे त्वितीति । प्रभाकरमते विशिष्टस्यातिरिक्तत्वादित्यस्यार्थं स्पष्टयितुमाह—गुरवस्त्विति । तन्मते लक्षणे वैशिष्ट्यमप्याह—तथा चेति । एवञ्च हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेन तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणभिन्नत्वमिति लक्षणार्थः सम्पद्यते । तथा सति सत्तायां गुणावच्छेदेन साध्यवद्वृत्तित्वाभावस्य सत्त्वेऽपि, विशिष्टसत्त्वस्यानतिरिक्तत्वेऽपि च विशिष्टनिरूपिताधिकरणत्वस्यातिरिक्तत्वस्वीकारेणैव द्रव्यं विशिष्टसत्त्वादित्यत्र न पूर्वोक्ताऽव्याप्तिः, तथा हि—हेतुतावच्छेदक ( समवाय ) सम्बन्धेन हेतुतावच्छेदका ( विशिष्टसत्तात्वा ) वच्छिन्ननिरूपकतानिरूपिताधिकरणतावद्द्रव्यावच्छेदेन साध्य ( द्रव्यत्व ) वद्वृत्तित्वाभावो न विशिष्टसत्त्वे शुद्धसत्त्वे वा किन्तु सामान्यत्वादावेव तद्भिन्नत्वं विशिष्टसत्त्वे हेतावितिति लक्षणसमन्वयः । अथ विशिष्टसत्त्वस्यातिरिक्तत्वे दोषाणां जागरूकतया तस्यानतिरिक्तत्वेऽपि विशिष्टनिरूपिताधिकरणत्वस्यातिरिक्तत्वपक्षमवलम्ब्य द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिसमुद्धारः कृतः, इदानीं विशिष्टनिरूपिताधिकरणत्वस्याप्यतिरिक्तत्वे मानाभाव इत्याशयेन शङ्कते—नन्विति । नातिरिक्तं = विशेषणाधिकरणत्वविशेष्याधिकरणत्वाभ्यामनतिरिक्तमित्यर्थः । ननु शुद्धविशिष्टाधिकरणत्वयोरनतिरिक्तत्वे—सत्तानिरूपिताधिकरणत्वस्य गुणे सत्त्वेन तदभिन्नविशिष्टसत्तानिरूपिताधिकरणत्वस्यापि स्वीकर्तव्यत्वे गुणो विशिष्टसत्तावानिति प्रतीत्यापत्तिरित्यत आह—विशिष्टसत्तावानितीति । प्रत्येकेति—विशेषणविशेष्योभयेत्यर्थः । एवञ्च यत्र विशेषणविशेष्योभयाधिकरणत्वं

दीधितिः

व्याप्तत्वात् । केवलान्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभि-
प्रायेणेत्याहुस्तच्चिन्त्यम् ।

जागदीशी

हितयैवोपपत्तेः । अन्यथा विशेषणाभावनिर्णयदशायामपि विशिष्टस-
त्तावत्त्वप्रतीत्यापत्तेः । विशिष्टसत्ताबुद्धौ विशेषणाभाववत्ताज्ञानस्य प्रति-
बन्धकतायाः स्वातन्त्र्येण कल्पनापातादित्युच्यते तदाप्याह—अनतिरि-
क्तत्वे त्विती ति प्राहुः । विशेषणेति । विशेषणं=गुणकर्मा-
न्यत्वं, विशेष्यं=सत्ता, तयोः सामानाधिकरण्यात्मकसम्बन्धस्यै-
वेत्यर्थः । साक्षात्संबन्धेन तस्य व्यभिचारित्वादाह—परम्परयेति ।
अवच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः । सत्त्वगुणकर्मान्यत्वयोर्द्रव्ये एव
सामानाधिकरण्यमिति प्रतीत्याऽवच्छेदकतासम्बन्धेन तदुभयसामाना-

चन्द्रिका

तत्रैव विशिष्टाधिकरणत्वमिति गुणे गुणान्यत्वस्यासम्भवेन, द्रव्ये गुणकर्मान्यत्व-
रूपविशेषणस्य सत्तारूपविशेष्यस्य चाधिकरणत्वसत्त्वेन द्रव्यं विशिष्टसत्तावदिति
प्रतीतिर्भवति, न तु गुणो विशिष्टसत्तावानिति प्रतीतिः । अन्यथेति । विशेषण-
विशेष्योभयाधिकरणत्वस्य विशिष्टाधिकरणत्वाऽप्रयोजकत्व इत्यर्थः । विशेषणा-
भावेति । गुणकर्मान्यत्वाभावनिर्णयदशायाम् । विशेषणाभावज्ञानस्य विशिष्टज्ञानं
प्रति प्रतिबन्धकत्वस्वीकारे दोषमाह—विशिष्टसत्ताबुद्धाविति । स्वातन्त्र्येण—
पृथक् प्रतिबन्धकत्वकल्पनापत्तिरूपदोषादित्यर्थः । विशिष्टस्यानतिरिक्तत्वे द्रव्यं
विशिष्टसत्त्वादित्यादावव्याप्तिवारणप्रकारमाह—विशेषणमिति । साक्षात्=
स्वरूपसम्बन्धेन । तथा च स्वरूपसम्बन्धेन तयोः सामानाधिकरण्यस्य सत्तायामपि
सत्त्वेन तत्र च द्रव्यत्वस्यासत्त्वाद् व्यभिचारित्वमिति भावः । अवच्छेदकताख्येति ।
अधिकरणरूपावच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः । एवं च द्रव्यावच्छेदेनैव
विशेषणं गुणकर्मान्यत्वं विशेष्यं च सत्ता तयोः द्रव्यत्वेन सह सामानाधिकरण्या-
त्सद्धेतुत्वमिति प्रपञ्चयति—सत्त्वगुणेति ।

जागदीशी

धिकरणस्य द्रव्य एव सत्त्वान्न व्यभिचार इति भावः । नन्वेवं ज्ञेयत्वाधिकरणघटाद्यवच्छेदेन वाच्यत्ववद्वृत्तित्वाभावस्य पटीयरूपादावेव सत्त्वात्तदधिकरणभिन्नत्वमस्त्येव ज्ञेयत्वादिहेतोरित्यग्रे केवलान्वयिन्यव्याप्तिप्रदर्शनमसङ्गतमत आह—केवलान्वयिनीति । द्वितीयेति । तत्र साध्यवद्भिन्नस्याप्रसिद्धत्वादिति भावः । यद्यपि इदं वाच्यं प्रमेयादित्यादौ तादात्म्येन केवलान्वयिनि हेतौ प्रथमलक्षणेऽव्याप्तिः सम्भवति प्रमेयावच्छेदेन वाच्यत्ववत्तादात्म्यकत्वविरहिणोऽप्रसिद्धेः । न च घटाद्यव-

चन्द्रिका

साध्यासामानाधिकरण्येत्यस्य—साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वार्थकत्वे वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिनि साध्य ( वाच्यत्व ) निष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्याऽभिहिताऽव्याप्तिः सार्वभौमलक्षणानुसारमसङ्गतेत्यभिप्रायेणाशङ्कते—नन्विति । अत्रेदं बोध्यं—विशेषणतासम्बन्धेनैव वाच्यत्वादेः ( अत्यन्ताभावाप्रतियोगित्वरूप ) केवलान्वयितया हेतुतावच्छेदकस्वरूपसम्बन्धेन ज्ञेयत्वाधिकरणपटाद्यवच्छेदेन साध्य-( वाच्यत्व ) वद्वृत्तित्वाभावस्य पटीयरूपादौ सत्त्वेन तद्भिन्नत्वस्य च स्वरूपेण ज्ञेयत्वादौ सत्त्वेन लक्षणसमन्वयसम्भव इति ।

वाच्यं प्रमेयादित्यादौ तादात्म्येन साधने केवलान्वयिनि प्रथमलक्षणीयसार्वभौमव्याख्यायामप्यव्याप्तिसम्भवे द्वितीयलक्षणानुधावनमनुचितमित्याशयेनाशङ्कते—यद्यपीति । अव्याप्तिप्रकारश्च—हेतुतावच्छेदक ( तादात्म्य ) सम्बन्धेन हेतु ( प्रमेय ) सम्बन्धिप्रमेयमात्रावच्छेदेन साध्यव ( वाच्यत्वव ) त्तादात्म्यकत्वस्यैव पदार्थमात्रे सत्त्वेन तद्विरहिणोऽसत्त्वाद्व्याप्तिरिति । ननु तादात्म्येन प्रमेयसम्बन्धिघटाद्यवच्छेदेन घटस्यैव वाच्यत्ववत्तादात्म्यकत्वं न तु घटत्वादाविति तादृशवाच्यत्ववत्तादात्म्यकत्वविरहो घटत्वादौ

जागदीशी

च्छेदेन वाच्यत्ववत्तादात्म्यविरहो घटत्वादौ सुलभः, तथा सति घटत्वं घटे न वाच्यमिति प्रतीत्यापत्तेः ।

तथापि स्वाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावोऽत्र लक्षणघटक इत्यभिप्रायेण द्वितीयलक्षणाभिधानम् । स्वपदस्य तत्तत्साधनव्यक्तिपरतया तादात्म्येन पटात्मकहेत्वधिकरणीभूतपटव्यक्तिनिरूपिततादात्म्येन वाच्यत्ववत्तादात्म्यकत्वाभावस्य पटावच्छेदेन पटत्वादावेव प्रसिद्धेः ।

वस्तुतस्तु केवलान्वयिन्यभावादिति मूले केवलान्वयित्वं वृत्तिमदत्यन्ताभावाप्रतियोगित्वमात्रं न त्ववच्छेदकगर्भं । तथा च तादात्म्येन किञ्चिदपि प्रमेयं न केवलान्वयीति द्वितीयलक्षण एव तादृशकेवलान्वयिन्यव्याप्तिसम्भवात् यथाश्रुतमेव सम्यगिति ध्येयम् । नव्यास्तु केवलान्वयिनि

चन्द्रिका

सुलभ इति नाव्याप्तिरिति चेत्तत्राह—तथा सतीति । उक्तरीत्या घटत्वे वाच्यत्ववत्तादात्म्यकत्वाभावे सतीत्यर्थः । स्वाधिकरणेत्यादेः=तत्तद्धेत्वधिकरणानुयोगिकहेतुतावच्छेदकसम्बन्धेनेत्यर्थः । एवं च केवलान्वयिन्यपि तादात्म्येन पटात्मकप्रमेयाधिकरणपटानुयोगिकतादात्म्यसम्बन्धेन वाच्यत्ववत्तादात्म्यविरहस्य पटत्वादौ सुलभत्वेनाव्याप्तिविरहाद् द्वितीयलक्षणानुधावनमिति भावः । लक्षणं सङ्गमयति—स्वपदस्येत्यादिना । ननु स्वा (तत्तद्धेत्व) धिकरणानुयोगिकहेतुतावच्छेदकसंसर्गेण साध्यवद्वृत्तित्वाभावस्य तत्तत्पदघटितत्वेनाननुगमात् परित्याज्यतया प्रथमलक्षणेऽव्याप्तिसम्भवे द्वितीयलक्षणानुधावनानौचित्यन्तदवस्थमेवेत्यत आह—वस्तुतस्त्विति । एवं च तादात्म्येन कस्यचिदपि प्रमेयादेः वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वाभावेन तादृशकेवलान्वयिनि प्रमेयत्वादौ साध्यवद्भिन्नस्याप्रसिद्ध्या द्वितीयलक्षणस्यैवाव्याप्तिरिति केवलान्वयिन्यव्याप्तेरभिधानं

दीधितिः

सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत्सत्ता-

जागदीशी

चाव्याप्तेरिति केवलान्वयिसामान्येऽव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्यर्थः। प्रथमलक्षणे यत्किञ्चित्केवलान्वयिनि तादात्म्येन प्रमेयादिहेतावव्याप्तावपि न क्षतिरित्याहुः। सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यस्यावच्छेदकत्वाभावं गुणादाववगाहते इत्यत्र समानाकारकप्रतीतिं दृष्टान्तयति—द्रव्यत्वे गुण इत्यादि। न तूक्तप्रतीतेर्गुणावच्छेदेन द्रव्यत्वे पृथिवीत्वसामानाधिकरण्याभावो विषयः, गुणस्य द्रव्यत्वानधिकरणतया तन्निष्ठपृथिवीवृत्तित्वाभावावच्छेदकत्वासम्भवात्, किन्तु द्रव्यत्वनिष्ठं यत्पृथिवीत्वसामा-

चन्द्रिका

द्वितीयलक्षणाभिप्रायेणैव सम्यगिति भावः। द्रव्यं सत्त्वादित्यादावतिव्याप्तिवारणार्थं हेत्वधिकरणा (व्यभिचारनिरूपकाधिकरणगुणा) वच्छेदेन साध्यवद्वृत्तित्वाभावस्य सत्तायां सत्त्वे योऽनुभवः प्रमाणतया पूर्वमुपन्यस्तस्तं साम्प्रतं तदतिव्याप्तिदार्ढ्यार्थं प्रकारान्तरेणोपपादयति—सत्तायामिति। तथा च—यथा द्रव्यत्वपृथिवीत्वयोः सामानाधिकरण्यं पृथिव्यामेव न तु गुणादौ तत्र तयोर्वृत्तित्वाभावात्, एवं सत्ताद्रव्यत्वयोः सामानाधिकरण्यं द्रव्य एवेति यथा द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिर्द्रव्यत्वनिष्ठपृथिवीत्वसामानाधिकरण्यस्यावच्छेदकत्वाभावमेव गुणेऽवगाहते न तु गुणावच्छिन्नं पृथिवीवृत्तित्वाभावं द्रव्यत्वे, तथा सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिरपि सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वाभावं, निरूपकताख्यस्वरूपसम्बन्धेन द्रव्यत्वसामानाधिकर-

दीधितिः

**निष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धेन**

जागदीशी

नाधिकरण्यं तदवच्छेदकत्वाभाव एव गुणे विषय इति तद्वदियमपीति भावः। **अवच्छेदकत्वस्येति।** प्रात्यक्षिकप्रत्ययाभिप्रायेणेदं, सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यादिशाब्दस्थलेऽवच्छेदकत्वोपस्थापकपदान्तरविरहात्तदभावस्य गुणादौ बोधयितुमशक्यत्वात्, किन्तु सत्तानिष्ठं द्रव्यत्वसामानाधिकरण्यं न गुणावच्छेद्यमित्याकार एव तत्र बोधः। गुणादावित्यत्र सप्तम्यर्थस्य नञर्थेऽन्वयादिति ध्येयम्। नन्वेवं तादृशप्रतीतेः सामानाधिकरण्याभावविषयकत्वमनुभवसिद्धं विरुध्येत। सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तदवच्छेदकत्वाप्रसिद्ध्या तादृशावच्छेदकत्वाभावविषयकत्वे प्रतीतेर्भ्रमत्वापत्तिश्च स्यादत आह— **परम्परासम्बन्धेनेति।** निरूपकताख्यस्वरूपसम्बन्धेनेत्यर्थः। न त्वव-

चन्द्रिका

ण्याभावं वा गुणेऽवगाहते, न तु गुणावच्छिन्नं साध्य (द्रव्यत्व) वद्वृत्तित्वाभावं सत्तायामिति गुणावच्छिन्नद्रव्यवृत्तित्वाभाववद्भिन्नत्वस्य सत्तायां सत्त्वेनातिव्याप्तिः स्यादेवेति बोद्धव्यम्। प्रात्यक्षिकेति। उपनीतभानात्मकप्रत्यक्षे पदानुपस्थितस्याप्यवच्छेदकताख्यपदार्थस्याभावविशेषणतया भानसम्भवो न तु सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति शाब्दबोधस्थल इति भावः।

तदभावस्य=तदवच्छेदकत्वाभावस्य। अथैवं सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वाभावं गुणेऽवगाहत इत्यभ्युपगते तादृशप्रतीतेः सामानाधिकरण्याभावविषयकत्वमनुभवसिद्धम्बाध्येतेत्याशयेन शङ्कते—नन्वेवमिति। तादृशप्रतीतेः सामानाधिकरण्याभावविषयकत्वस्यानुभवे विवादाद् दोषान्तरमाह—सामानाधिकरण्यस्येति। सत्ता-

### दीधितिः

द्रव्यत्वसामानाधिकरण्यस्य वा अभावं गुणेऽवगाहते, न तु सत्तायामेव द्रव्यवृत्तित्वाभावं, सत्ता न द्रव्यवृत्तित्वाभाववती,

### जागदीशी

च्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः, तथा सति सत्तायां द्रव्ये न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिप्रसङ्गात् । सामानाधिकरण्यस्य व्याप्यवृत्तितया कुत्राप्यवच्छेदकत्वसम्बन्धेन तस्यासत्त्वात् । न त्विति । तथा च द्रव्यं सत्त्वादित्यादावतिव्याप्तिरिति भावः । ननूक्तदृष्टान्तस्थले बाधकसत्त्वादवच्छेदकत्वाभावोऽस्तु प्रतीतेर्विषयः, प्रकृते तु साक्षात्सामानाधिकरण्याभावविषयकत्वे न किञ्चिद्बाधकमस्तीत्यतो बाधकमाह— सत्ता नेति ।

### चन्द्रिका

निष्ठद्रव्यत्वसामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तन्निरूपितावच्छेदकत्वस्याप्रसिद्धत्वात् कथं सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वाभावं गुणेऽवगाहेत, तदवगाहने च निरूपितत्वसम्बन्धेन सामानाधिकरण्याभाववत्यवच्छेदकत्वे सामानाधिकरण्यावगाहित्वेनोक्तप्रतीतेर्भ्रमत्वमेव स्यादिति भावः । पूर्ववदत्रापि परम्परासम्बन्धेनेत्यस्यावच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थ एव कुतो नेत्यत्र हेतुमाह—तथा सतीति । अवच्छेदकताख्यस्वरूपसम्बन्धस्वीकारे सतीत्यर्थः । सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यस्य व्याप्यवृत्तित्वेनावच्छेदकताख्यस्वरूपसम्बन्धेन कुत्राप्यसत्त्वात् सत्तायां द्रव्ये न द्रव्यत्वसामानाधिकरण्यमिति प्रतीत्यापत्तेरिति तत्त्वम् । उक्तदृष्टान्तेति । द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति दृष्टान्तस्थल इत्यर्थः । बाधकेति । गुणनिष्ठद्रव्यत्वानधिकरणत्वरूपबाधकसत्त्वाद् द्रव्यत्वनिष्ठपृथिवीत्वसामानाधिकरण्यावच्छेदकत्वाभावो गुणेऽवगाहितुं शक्यते, प्रकृते तु सत्ताया गुणेऽपि

### दीधितिः

द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्वजनप्रसिद्धप्रतीतिबाधितत्वात् ।

### जागदीशी

तथा च सत्तायां द्रव्यवृत्तित्वाभावसत्त्वे द्रव्यवृत्तित्वाभाववद्भिन्नत्वधीस्तत्र न स्यादिति भावः । ननु द्रव्यवृत्तित्वाभाव इव तद्वद्भेदोऽप्यव्याप्यवृत्तिर्वाच्यः । तथा च द्रव्यगुणात्मकविभिन्नावच्छेदेन तयोः सत्तायां समावेशात् कुतो विरोध इत्यत आह—द्रव्यवृत्तित्वाभाव इति ।

### चन्द्रिका

वृत्तितया साक्षात्= समवायसम्बन्धावच्छिन्नद्रव्यवृत्तित्वाभावस्य गुणावच्छेदेन सत्तायामवगाहने बाधकाभाव इति बोध्यम् । ननु सत्तायां द्रव्यवृत्तित्वसत्त्वेन द्रव्यवृत्तित्वाभावस्यासत्त्वात् सत्ता न द्रव्यवृत्तित्वाभाववतीति सर्वजनप्रसिद्धप्रतीतिबाधादेव साध्य—(द्रव्यत्व) वद्वृत्तित्वाभावस्य सत्तायामसिद्धया द्रव्यं सत्त्वादित्यत्रातिव्याप्तिरूपेष्टसिद्धौ किमर्थं द्रव्यवृत्तित्वाभावो नेति प्रतीत्यन्तरप्रदर्शनमिति बोधयितुं शङ्कते—नन्विति । तथा च सत्तानिष्ठद्रव्यवृत्तित्वाभावस्याव्याप्यवृत्तित्वाङ्गीकारे ( अव्याप्यवृत्तिसंयोगतदभाववत् ) द्रव्यगुणाद्यवच्छेदकभेदेन सत्तायां द्रव्यवृत्तित्वाभावस्य तादृशवृत्तित्वाभाववद्भेदस्य च सत्त्वेन विरोधाभाव इति भावः । तद्वद्भेदोऽपि = द्रव्यवृत्तित्वाभाववद्भेदोऽपि । तयोः = द्रव्यवृत्तित्वाभाव-द्रव्यवृत्तित्वाभाववद्भेदयोः । समावेशात् = वृत्तित्वात् । द्रव्यवृत्तित्वाभाव इतीति । तथा च द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वाभावनिश्चयेन गुणावच्छेदेनापि सत्तायां द्रव्यवृत्तित्वाभावज्ञानस्य बाधितत्वमिति भावः । ननूक्तप्रतीतिर्यथा—सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वाभावं गुणेऽवगाहते न तु गुणावच्छेदेन सत्तायां द्रव्यवृत्तित्वाभावं, तथा मूले वृक्षो न कपिसंयोगीति प्रतीतिरपि वृक्षनिष्ठकपिसंयोगावच्छेदकत्वाभावमेव मूलेऽवगाहेत न तु

दीधितिः

बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः।

जागदीशी

नन्वेवं मूले न कपिसंयोगीति प्रतीत्या वृक्षादौ कपिसंयोगाभावोऽपि न सिद्ध्येत्, तत्रापि वृक्षनिष्ठसंयोगावच्छेदकत्वाभावस्य मूलेऽवगाहनसम्भवादत आह—बाधकाभावात्त्विति। कपिसंयोगाभावो न वृक्षवृत्तिरित्यादिप्रत्ययस्यासम्भवादिति भावः।

ननु द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रतीतिरेवासिद्धा, द्रव्यवृत्तित्वाभावो गुणावच्छेदेन सत्तावृत्तिरिति प्रत्ययात्, एकशेषस्य कर्तु-

चन्द्रिका

मूलावच्छेदेन वृक्षे कपिसंयोगाभावमित्याशयेनाह—नन्विति। प्रमात्मकप्रतीतिरेव वस्तुनियामिकेति मत्वा आह—कपिसंयोगाभाव इति। तथा च कपिसंयोगाभावो न वृक्षवृत्तिरिति प्रत्ययासम्भवेन कपिसंयोगतदभावयोरवच्छेदकभेदेनैकत्र वृक्षादौ सत्त्वमङ्गीकार्यं, द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रत्ययसम्भवेन च सत्तायां द्रव्यवृत्तित्वाभावो नाङ्गीकार्य इति विवेकः। ननु यथा शाखावच्छेदेन कपिसंयोगस्य, मूलावच्छेदेन तदभावस्य च प्रतीत्या वृक्षे संयोगतदभावौ सिद्ध्यतस्तथा सत्तायामपि द्रव्यावच्छेदेन द्रव्यवृत्तित्वं, गुणावच्छेदेन द्रव्यवृत्तित्वाभावश्च सिद्ध्येदिति द्रव्यं सत्त्वादित्यत्र हेत्व (सत्ताऽ) धिकरणगुणावच्छेदेन साध्य (द्रव्यत्व) वद्वृत्तित्वाभावस्य सत्तायां हेतौ सम्भवेन तद्भिन्नत्वस्य च तत्रासम्भवेनातिव्याप्तिविरहात् नोक्तलक्षणस्य दूषितत्वमिति शङ्कते—नन्विति। एकशेषस्येति। एकस्य पक्षस्य स्वीकार्यत्वमपरस्य च नेत्येकशेषः। तद्यथा द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्येकः पक्षः, गुणावच्छेदेन द्रव्यवृत्तित्वाभावः सत्तावृत्तिरित्यपरस्तत्र विनिगमनाविरहेण पूर्वस्य स्वीकर्तव्यत्वमपरस्य च नेति वक्तुमशक्यतया नोक्तातिः-

दीधितिः

अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च, तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धेः ।

जागदीशी

मशक्यत्वादतो दोषान्तरमाह— अतीन्द्रियेति । मनस्त्ववदणुत्वादित्यादावित्यर्थः । तत्र—अतीन्द्रियसाध्यकेऽसद्धेतौ । ननु प्रत्यक्षासम्भवेऽपि अणुत्वं मनस्त्वसामानाधिकरण्याभाववन्मनस्त्वाभाववद्वृत्तित्वात्पृथिवीत्ववदित्यनुमानेनैव तत्र सामानाधिकरण्याभावः सेत्स्यतीत्यत आह—

चन्द्रिका

व्याप्तिरिति भावः । ननु गुणावच्छेदेन साध्यवद्वृत्तित्वाभावस्य सत्तायां सत्त्वेन द्रव्यं सत्त्वादित्यत्र सार्वभौमलक्षणस्यातिव्याप्त्यभावेऽपि मनस्त्ववदणुत्वादित्याद्यतीन्द्रियसाध्यकातीन्द्रियासद्धेतावेवातिव्याप्तिरित्याशयेनाह—मनस्त्ववदिति । तथा हि—मनस्त्ववदणुत्वादित्यत्र हेतुसाध्ययोरतीन्द्रियतया साध्यसामानाधिकरण्यस्य प्रत्यक्षासम्भवेन साध्यसामानाधिकरण्याभावस्यापि प्रत्यक्षासम्भवः, एवं च हेतुतावच्छेदकस्वरूपसम्बन्धेन हेत्वधिकरणा ( अणव ) वच्छेदेन साध्य ( मनस्त्व ) वद्वृत्तित्वाभावस्य हेतौ (अणुत्वे) प्रत्यक्षासम्भवेनासिद्धतया घटत्वादावेव तत्स्वीकार्यं तद्भिन्नत्वस्य च हेतौ सत्त्वेनातिव्याप्तिर्भवतीति तत्त्वम् । अथाणुत्वे मनस्त्वसामानाधिकरण्याभावस्य प्रत्यक्षासम्भवेऽपि अनुमानेनैव सिद्ध्या नातिव्याप्तिरित्यभिप्रेत्य शङ्कते— नन्विति । पृथिवीत्वस्य मनस्त्वाभाववति घटादौ सत्त्वेन मनस्त्वसामानाधिकरण्याभावस्यापि तत्र सत्त्वमिव अणुत्वस्यापि मनस्त्वाभाववति पार्थिवादिपरमाणौ सत्त्वेन तत्र ( अणुत्वे ) मनस्त्वसामानाधिकरण्याभावस्य सत्त्वमिति—अणुत्वं मनस्त्वसामानाधिकरण्याभाववन्मनस्त्वाभाववद्वृत्तित्वात्पृथिवीत्ववदित्यनुमानेनैव अणुत्वे हेतौ साध्यसामानाधिकरण्याभावः (साध्य = मनस्त्ववद्वृत्तित्वाभावः) सिद्ध्येदिति नाति-

दीधितिः

न च तदभाववद्वृत्तित्वेन तत्र तदनुमेयं, तद्वद्वृत्तिभिन्नत्वस्योपाधित्वात् ।

जागदीशी

तद्वद्वृत्तीति । साध्यवद्वृत्तिभिन्नत्वस्येत्यर्थः । तथा चोक्तानुमाने मनस्त्ववद्वृत्तिभिन्नत्वमुपाधिस्तस्य च साध्यव्यापकत्वं घटत्वादौ, साधनाव्यापकत्वं च द्रव्यत्वादौ ग्राह्यम् । भेदस्याप्यव्याप्यवृत्तित्वे तु साध्यवद्वृत्तितत्तद्व्यक्तित्वावच्छिन्नभेदकूट उपाधिर्बोध्यः । ननूक्तोपाध्यप्रतिसन्धानदशायामुक्तानुमानादेव साध्यवद्वृत्तित्वाभावसिद्धिस्तत्र भविष्यति, अन्यथा

चन्द्रिका

व्याप्तिरिति भावः । अणुत्वे साध्यसामानाधिकरण्याभावानुमाने उपाधिं योजयति— साध्यवदिति । एवं च साध्यस्य = मनस्त्वसामानाधिकरण्याभावस्य घटत्वादौ सत्त्वेन तत्र मनस्त्ववद्वृत्तिभिन्नत्वस्योपाधेरपि सत्त्वमिति साध्यव्यापकत्वम्, साधनस्य = मनस्त्वाभाववद्वृत्तित्वस्य द्रव्यत्वादौ सत्त्वेन मनसोऽपि द्रव्यतया तत्र मनस्त्ववद्वृत्तिभिन्नत्वस्यासत्त्वेन साधनाव्यापकत्वमित्युपाधेः पक्षे (अणुत्वे) स्वाभावेन साध्याभावोन्नायकतया मनस्त्वसामानाधिकरण्याभावाभावस्य = मनस्त्वसामानाधिकरण्यस्य (साध्य = मनस्त्ववद्वृत्तित्वस्य) साधकत्वमित्यनुमानेनापि साध्यवद्वृत्तित्वाभावस्याणुत्वेऽसिद्ध्याऽतिव्याप्तिः स्यादिति भावः । भेदस्येति । मनस्त्ववद्वृत्तिभिन्नत्वरूपोपाधिघटकीभूतभेदस्येत्यर्थः । तथा च तस्याव्याप्यवृत्तित्वे घटाद्यवच्छेदेन मनस्त्ववद्वृत्तिभिन्नत्वस्य मनस्त्वाभाववद्वृत्तित्वरूपहेत्वधिकरणे = द्रव्यत्वसत्त्वादौ सत्त्वेन साधनव्यापकतया नोपाधित्वं तस्येत्यत आह— साध्यवद्वृत्तितत्तदिति । एवं च द्रव्यत्वस्यापि साध्य (मनस्त्व) वद्वृत्तित्वेन द्रव्यत्वव्यक्तिभेदस्य मनस्त्ववद्वृत्तितत्तद्व्यक्तित्वावच्छिन्नभेदकूटात्मकोपाध्यन्तर्गतस्य हेत्वधिकरणे द्रव्यत्वेऽसत्त्वेन साधनाव्यापकत्वमिति भावः । अन्यथेति । उपाध्यप्रतिसन्धानदशायामप्युक्तानुमानेन साध्यवद्वृत्तित्वाभावासिद्धावित्यर्थः । तथा च बाधकाभावादणुत्वे मनस्त्ववद्वृत्ति-

दीधितिः

किञ्च इदमिदानीमिति प्रतीतिनियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः। तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः।

इति सिंहव्याघ्रलक्षणदीधितिः समाप्ता।

---

जागदीशी

व्याप्त्यन्तरस्यापि तत्रातिप्रसङ्गादित्यत आह—किञ्चेति।

इदमित्यादि। तथा च कालो गोमान् गोत्वादित्यादौ कालिकसम्बन्धेन हेतावव्याप्तिः, कालिकसम्बन्धेन हेतुमति महाकाले तेन सम्बन्धेन कालवृत्तित्वाभावस्य कुत्राप्यसत्त्वात्। न च कालावच्छेदेन गगनादावेव साध्यवद्वृत्तित्वाभावस्य प्रसिद्धिः, कालस्य गगनाद्यनधि-

चन्द्रिका

त्वात्मकसाध्यसामानाधिकरण्यस्य ज्ञायमानत्वात्तत्र तदवच्छेदकरूपवत्त्वात्मकं व्याप्तिलक्षणमापद्येतेत्याशयेनाह—व्याप्त्यन्तरस्यापीति। साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वात्मकस्य व्याप्तिलक्षणान्तरस्यापीत्यर्थः। तत्र—मनस्त्वसाध्यकाणुत्वे। एवं पूर्वत्रापि। कालो गोमानिति। अत्र हेतुतावच्छेदककालिकसम्बन्धेन हेत्व (गोत्वा) धिकरणे महाकाले तेनैव सम्बन्धेन साध्यव (गोम) द्वृत्तित्वाभावस्या (कालिकसम्बन्धेन पदार्थमात्रस्य महाकाले वृत्तित्वात्) प्रसिद्ध्याऽव्याप्तिः स्यादेव सार्वभौमलक्षणस्येति भावः। ननु केनापि वृत्तिनियामकसम्बन्धेन गगनस्याधिकरणाऽप्रसिद्ध्या महाकालेऽपि वृत्तित्वाऽसम्भवेन कालावच्छेद्यसाध्यवत् (महाकाल) वृत्तित्वाभावस्य गगने सत्त्वेन न पूर्वोक्ताऽव्याप्तिरित्याशयेन शङ्कते—न चेति। कालस्येति। तथा च तदधिकरणमेव तन्निष्ठधर्मावच्छेदकमिति नियमात् गगनानधिकरणकालस्य गगननिष्ठमहाकालवृत्तित्वाभावावच्छेदकत्वासम्भवात् कालावच्छेद्यमहाकालवृत्तित्वाभावस्य गगनेऽप्रसिद्धिरेवेति भावः।

जागदीशी

करणत्वेन तन्निष्ठवृत्तित्वाभावे कालावच्छेद्यत्वासम्भवात्, कालिकसम्बन्धेन गगनादेर्वृत्तिमत्त्वस्वीकाराच्च। यद्यपि गोत्वाद्यधिकरणतत्तत्क्षणावच्छेदेन कालवृत्तित्वाभावस्य तत्तत्क्षणासमानकालीने तत्तत्क्षणगोचरज्ञाने प्रसिद्धिः, तत्तत्क्षणस्यापि विषयतया स्वविषयकज्ञानाधिकरणतया तन्निष्ठताहशवृत्तित्वाभाववत्तायामवच्छेदकत्वसम्भवात्।

तथापि महाकाल एव कालिकसम्बन्धेनाधिकरणम्, उपाधीनां तु तद्वृत्तितायामवच्छेदकत्वमात्रमिति प्राचीनसिद्धान्तमनुरुध्येदम्। महाकालनिरूपितविशेषणतया वा हेतावव्याप्तिर्द्रष्टव्या, इदमिदानीमित्या-

चन्द्रिका

ननु कालिकसम्बन्धेन महाकाले गगनस्यावृत्तित्वे कालिकसम्बन्धेन पदार्थमात्रस्य महाकाले वृत्तित्वमिति सिद्धान्तव्याघात इत्यत आह—कालिकसम्बन्धेनेति। तथा च गगनेऽपि महाकालवृत्तित्वाभावाऽप्रसिद्ध्याऽव्याप्तिः स्यादेवेति भावः। तत्तत्क्षणासमानकालीने = गोत्वाद्यधिकरणतत्तत्क्षणासमानकालीने। तत्तत्क्षणगोचरज्ञाने = गोत्वाद्यधिकरणतत्तत्क्षणविषयकज्ञाने। एवञ्च विभिन्नकालीनवस्तुनोः विषयत्वविषयित्वातिरिक्तसम्बन्धेनाधाराधेयभावानभ्युपगमात् तत्तत्क्षणासमानकालीनतत्तत्क्षणविषयकज्ञानस्य विषयतयैव तत्तत्क्षणे सत्त्वं, न तु कालिकेन तत्तत्क्षणघटितकाले—इति गोत्वाद्यधिकरणतत्तत्क्षणावच्छेद्य-गवादिमत्कालवृत्तित्वाभावस्य ताहशतत्तत्क्षणासमानकालीन-ताहशतत्तत्क्षणविषयकज्ञाने प्रसिद्ध्या नाव्याप्तिरिति शङ्कते—यद्यपीति। अव्याप्तिं योजयति—तथापीति। उपाधीनाम् = तत्तत्क्षण-तद्घटितात्मककालविशेषाणाम्। तद्वृत्तितायाम् = महाकालनिरूपितवृत्तितायाम्। एवञ्च यथा कपिसंयोगादेः शाखादितत्तद्देशविशेषावच्छेदेन वृक्षे वृत्तित्वं, तथा तत्तत्खण्डकालावच्छेदेन पदार्थमात्रस्य महाकाल एव वृत्तित्वं, खण्डकालस्तु अवच्छेदकमात्रं न त्वधिकरणमिति प्राचीनसिद्धान्तदिशा हेतुतावच्छेदककालिकसम्बन्धेन हेत्वधिकरणे = महाकाले पदार्थमात्रस्य वृत्तितया ताहशसाध्यवद्वृत्तित्वाभावस्याऽप्रसिद्ध्याऽव्याप्तिः स्यादेवेति भावः। घटध्वंसवत्क्षणादन्यो घटवत्क्षण इत्यादिप्रतीत्या खण्डकालस्याप्यधिकरणत्वाङ्गीकारे आह—महाकालनिरूपितेति। तथा च महाकालनिरूपितविशेषणता (कालिक) सम्बन्धेन महाकाल एव पदार्थमात्रस्य वृत्तित्वं न तु खण्डकाल इति ताहशसम्बन्धेन ताहशसाध्यवद्वृत्तित्वाभावाऽप्रसिद्ध्याऽव्याप्तिः स्यादेव। महाकालनिरूपितविशेषणतासम्बन्धस्य लाभप्रकारमाह—इदमिदानीमिति।

**जागदीशी**

कारकप्रतीतिनियामकविशेषणतायां यो विशेषस्तेन हेतुतायामिति व्याख्यया तादृशविशेषणतायाः प्राप्तेः। सामान्यत एव विभिन्नकालीनयोर्नाधाराधेयभाव इति मते नानुपपत्तिगन्धोऽपि। क्षणानां स्वासमानकालीनज्ञानस्य विषयतयाप्यनधिकरणत्वेन तदवच्छेदेन ज्ञाने साध्यवद्वृत्तित्वाभावप्रसिद्ध्यसम्भवादिति ध्येयम्। अत्र हेतुतावच्छेदकसम्बन्धेन स्वाधिकरणे स्वनिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य विवक्षायां न कोऽपि दोषः।

साधनीभूतगोत्वाधिकरणमहाकालावच्छेदेन गोत्वनिरूपितकालिकसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य घटादावेव प्रसिद्धत्वात्। साध्यसामानाधिकरण्यत्वं यद्धर्मावच्छिन्नाधिकरणावच्छेद्यहेतुवृत्तिकात्य-

**चन्द्रिका**

इदम् = गोत्वादिकम्। इदानीम् = खण्डकाले। एवञ्च महाकालानुयोगिककालिकसम्बन्धेन गोत्वाद्यधिकरणमहाकालावच्छेदेन तादृशसम्बन्धावच्छिन्नगवादिमन्महाकालनिरूपितवृत्तित्वाभावाप्रसिद्धिरिति बोध्यम्। सार्वभौममतेनाव्याप्तिमुद्धरति—अत्रेति। स्वाधिकरणे, स्वनिरूपितेत्युभयत्र स्वपदं हेतुपरम्। स्वनिरूपितत्वं = स्व ( हेतु ) प्रतियोगिकत्वं बोध्यम्।

एवञ्च हेतुतावच्छेदकसम्बन्धेन स्वा ( हेत्व ) धिकरणावच्छेदेन स्व ( हेतु ) प्रतियोगिकत्वविशिष्टहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावस्तदधिकरणभिन्नत्वं लक्षणस्वरूपं पर्यवसन्नम्। एवं सति प्रकृते गोत्वप्रतियोगिककालिकसम्बन्धेन गोत्वस्यैव महाकाले वृत्तित्वं न तु घटादेः, तत्र तादृशसाध्यवद्वृत्तित्वाभावस्य सत्त्वेन कालो गोमान् गोत्वादित्यादौ न पूर्वोक्ताऽव्याप्तिरिति भावः। निष्कृष्टलक्षणमाह—साध्यसामानाधिकरण्यत्वमिति। यद्धर्मावच्छिन्नेति। हेतुतावच्छेदकधर्मावच्छिन्नेत्यर्थः। एवं तद्धर्मवत्त्वमपि हेतुतावच्छेदकधर्मवत्त्वं बोध्यम्। वह्निमान् धूमादित्यादौ साध्य ( वह्नि ) सामानाधिकरण्यत्वं यद्धर्मा ( धूमत्वा ) वच्छिन्नधूमाधिकरणा ( पर्वता ) वच्छेद्य-धूमनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं तद्धर्मवत्त्वं धूमेऽस्तीति लक्षणसमन्वयः। अस्मिंल्लक्षणे न व्याप्ति-

जागदीशी

न्ताभावप्रतियोगितानवच्छेदकं तद्धर्मवत्त्वं वा विवक्षितम्। इत्थञ्च वाच्यं प्रमेयादित्यादौ प्रमेयव्यक्तीनां भेदेऽपि न व्याप्तेर्भेद इत्यस्मद्गुरुचरणाः।

केचित्तु—स्वनिष्ठं यत्साध्यवद्वृत्तित्वं हेत्वधिकरणावच्छेद्यतदभावाधिकरणभिन्नत्वमित्यर्थः, तथा च तादृशाभावाधिकरणत्वं सद्धेतुस्थले स्वभिन्नव्यक्तावेव प्रसिद्धमतो नाव्याप्तिरित्याहुः। साध्यवद्वृत्तित्वाभावाधिकरणत्वसामान्ये यन्निष्ठत्व-यदधिकरणावच्छेद्यत्वोभयाभाववत्त्वं व्याप्तिः। पर्वतीयरूपनिष्ठं यत्पर्वतावच्छेद्यवह्निमत्संयुक्तत्वाभावाधिकरणत्वं न तद्धूमनिष्ठं, यच्च धूमनिष्ठं न

चन्द्रिका

भेद इत्याह—इत्थञ्चेति। प्रमेयव्यक्तीनां भेदेऽपि प्रमेयत्वस्यैक्येन न व्याप्तिभेद इति ध्येयम्। लक्षणान्तरमाह—केचित्त्विति। अत्र स्वं=हेतुः। तदभावेति=स्वनिष्ठसाध्यवद्वृत्तित्वाभावेत्यर्थः। तथा च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणावच्छेदेन यः स्ववृत्तित्वविशिष्टसाध्यवद्वृत्तित्वाभावस्तदधिकरणभिन्नत्वं व्याप्तिरिति लक्षणार्थः। लक्ष्ये लक्षणं संगमयति—तथा चेति। एवञ्च कालो गोमान् गोत्वादित्यादौ गोत्वनिष्ठं यत्साध्यवद्वृत्तित्वं तदभावाधिकरणत्वं घटादौ तद्भिन्नत्वं च हेताविति लक्षणसमन्वयः। अधिकरणताधर्मिकोभयाभावघटितलक्षणमाह—साध्यवदिति। अत्र यत्पदद्वयेन हेतुर्ग्राह्यः। एवञ्च वह्निमान् धूमादित्यादौ साध्यव (वह्निम) द्वृत्तित्वाभावाधिकरणता घटादिनिष्ठा तत्सामान्ये हेतुनिष्ठत्व—हेत्वधिकरणावच्छेद्यत्वोभयाभावसत्त्वेन लक्षणसमन्वयः। उभयाभावापेक्षया लाघवात्प्रत्येकाभावनिवेशे दोषमाह—पर्वतीयेति। यन्निष्ठत्वानुपादाने वह्निमान् धूमादित्यत्र वह्निमत्संयुक्तत्वाभावाधिकरणता या पर्वतीयरूपनिष्ठा तस्यां यद (हेतु=धूमा) धिकरणपर्वतावच्छेद्यत्वसत्त्वेनाव्याप्तिः। एवं यदधिकरणावच्छेद्यत्वानुपादानेऽपि धूमावयवावच्छेदेन वह्निमद्वृत्तित्वाभावाधिकरणता या धूमनिष्ठा तस्यां यत् (धूम) निष्ठत्वस्य सत्त्वेनाव्याप्तिः। उभयाभावोपादाने तु पर्वतीयरूपनिष्ठसाध्यवत्संयुक्तत्वाभावाधिकरणतायां धूमाधिकरणपर्वतावच्छेद्यत्वसत्त्वेऽपि धूमनिष्ठत्वाभावेन, धूमावयवावच्छेदेन धूमनिष्ठसाध्यवद्वृत्तित्वाभा-

जागदीशी

तद्धूमाधिकरणावच्छेद्यम्, अधिकरणभेदेन तस्य नानात्वात्। अन्यथा पर्वते तदीयरूपे न वह्निमत्संयुक्तत्वमितिवत्पर्वते धूमे न वह्निमत्संयुक्तत्वमित्यादिप्रतीत्यापत्तेः। अतो वह्निमान् धूमादित्यादौ नाव्याप्तिः।

व्याप्यवृत्तेरवच्छेदकत्वास्वीकारे तु तादृशाभावाधिकरणत्वसामान्ये यदधिकरणावच्छेद्यत्वसामान्याभावस्तत्त्वमित्येव वाच्यमित्यादिकं पुनरुदक्तरत्वादुपेक्षितम्। वाच्यत्वादिसाध्यके तादात्म्येन हेतावव्याप्तेश्च, वाच्यत्ववत्तादात्म्याभावाप्रसिद्धेः।

एतेन सत्तायां कर्मणि न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतौ कर्मणि इव कर्मसत्त्वयोः समवायस्याप्यवच्छेदकत्वं भासते। अन्यथा इदानीं सत्तायां न द्रव्यत्वसामानाधिकरण्यमित्यादिप्रतीत्यापत्तेः। एतत्कालस्य कर्मानतिरेकात्।

चन्द्रिका

वाधिकरणतायां धूमावयवावच्छेद्यत्वसत्त्वेऽपि हेत्वधिकरणावच्छेद्यत्वासत्त्वेनोभयाभावसत्त्वान्नोक्ताव्याप्तिरिति भावः।

ननु पर्वतीयरूपनिष्ठा पर्वतावच्छेद्यवह्निमत्संयुक्तत्वाभावाधिकरणता यदि धूमनिष्ठ–धूमावयवावच्छेद्यवह्निमत्संयुक्तत्वाभावाधिकरणतातोऽभिन्ना तदोभयाभावप्रवेशेऽप्यव्याप्तिस्तदवस्थैवेत्यत आह—अधिकरणभेदेनेति। तस्य—तादृशाधिकरणत्वस्य। अतः - उभयाभावप्रवेशात्।

उदक्तरत्वात्=यथाश्रुतमूलादक्तरबहिर्भूतत्वात्, सार्वभौमलक्षणाननुसारित्वादित्यर्थः। ननूदक्तरत्वेऽपीष्टसिद्धयै लक्षणान्तरमेवास्त्वित्यत आह— वाच्यत्वादीति। हेतुतावच्छेदकतादात्म्यसम्बन्धेन पदार्थमात्रस्य वाच्यत्ववति सत्त्वेन वाच्यत्ववत्तादात्म्याभावाऽप्रसिद्धिरिति। एतेन—वाच्यत्वसाध्यके तादात्म्येन प्रमेयवत्त्वादिहेतावव्याप्तिभयेन। निरस्तमिति परेणान्वयः। सत्तायामिति। कर्मावच्छेदेन सत्तानिष्ठद्रव्यत्वसामानाधिकरण्याभावप्रतीतावित्यर्थः। अन्यथा=सम्बन्धस्यावच्छेदकत्वाभाने। इदानीं सत्तायां द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिः कालिकसम्बन्धेन इदानीं काल एव सत्तायां द्रव्यत्वसामानाधिकरण्यमवगाहते, सम्बन्धस्यानवच्छेदकत्वे तु इदानीं सत्तायां न द्रव्यत्वसामानाधिकरण्यमित्येव प्रतीतिः स्यादिति भावः। सूर्यपरिस्पन्दात्मककालस्य कर्मानतिरेकितया आह— एतत्कालस्येति।

जागदीशी

एवञ्च यद्धेतुव्यक्त्यधिकरणीयहेतुतावच्छेदकसम्बन्धे साध्यवद्वृत्तित्वाभावावच्छेदकत्वं नास्ति तत्त्वमित्यर्थः। कालो गोमान् गोत्वादित्यादौ कालवृत्तित्वाभावावच्छेदकत्वस्य द्रव्यत्वादिनिष्ठ आत्मसमवेतत्वादौ प्रसिद्धस्य गोत्वाधिकरणीयकालिकसम्बन्धे विरहान्नाव्याप्तिरित्यपि निरस्तमिति संक्षेपः।

इति सिंहव्याघ्रलक्षणजागदीशी टीका समाप्ता।

---

चन्द्रिका

फलितार्थमाह— एवञ्चेति। सम्बन्धस्याप्यवच्छेदकत्वभाने चेत्यर्थः। तथा चात्र— यद्धेतु(गोत्व) व्यक्त्यधिकरणीयकालिकसम्बन्धे साध्यव (गोम) त्कालवृत्तित्वाभावावच्छेदकत्वाभावसत्त्वाल्लक्षणसमन्वयः। तादृशवृत्तित्वाभावावच्छेदकत्वस्य प्रसिद्धिस्थलं स्फोटयति— द्रव्यत्वादिनिष्ठ इति। द्रव्यत्वात्मसमवायनिष्ठस्येति तात्पर्यम्।

इति सिंहव्याघ्रलक्षणजागदीशीव्याख्यायाः झोपाह्व—
पं० श्रीश्यामसुन्दरशर्म्मविरचिता
चन्द्रिका टीका समाप्ता।

ॐतत्सत्।

---

# प्रणाम-पुष्पाञ्जलिः

तुरीयातीतकन्तत्त्वं सच्चिदानन्दविग्रहम् ।
श्रुतीनाञ्च परं लक्ष्यं हृदि मे राजतां सदा ॥१॥

वाच्यः स्यां यदि वाऽवाच्यो विबुधैरखिलैरपि ।
मयि कश्चिन्न तल्लेशः परेशयमितात्मनि ॥२॥

चिरविहितनिवासो यद्गृहे लालितोऽहम् ।
तनुजसदृशप्रीत्या पाठितश्चातियत्नात् ॥
सुरगुरुसमुपज्ञान् सद्गुरूनानमामि ।
मुरलिधरयुतांस्तानीड्यदामोदराख्यान् ॥३॥

जगदीशम्परप्रज्ञं षष्ठीनाथं विदांवरम् ।
लक्ष्मीनाथानथ श्रीलान् सर्वविद्यान्नुमो गुरून् ॥४॥

धर्मनिष्ठांस्तथा पितॄन् नमामि मनसा सदा ।
एतेषां कृपया नूनं फलं लब्धमिदम्मया ॥५॥

ब्रह्मज्ञानतृपाशमाय विबुधब्रह्मर्षिसंसेविता ।
चिच्छक्तिर्निखिलेष्टदा सुरनुता सीताऽपि यत्रोद्गता ॥
श्रौतस्मार्तरहस्यविद्द्विजसरिद्योगीन्द्रवृन्दैर्वृता ।
सा पुण्या जनकप्रतिष्ठ-मिथिला स्यान्मे परप्रीतये ॥६॥

ब्रह्मपुरवसतिवासी श्रीश्यामसुन्दरो हि मैथिलो विद्वान् ।
कृतवानिमां सुटीकां बुधजनमनस्तुष्टिभावेन ॥७॥

---

येव

नमस्ते प्रामाण्यवादाय, मत्कवित्वापहारिणे ॥

## चन्द्रिकाकारकृत-पुस्तकानि—

| | |
|---|---|
| १. सर्ववेदान्तसारसंग्रहः | २) |
| २. दाम्पत्यसौरभ ( मैथिली ) | १॥) |
| ३. उत्तररामचरित ( मि० भाषानुवाद ) | यन्त्रस्थ |

प्राप्तिस्थानम्—

१. चौखम्भा संस्कृत-पुस्तकालय
वाराणसी

२. माष्टर खेलाड़ीलाल एण्ड सन्स
कचौड़ीगली, वाराणसी

३. मोतीलाल बनारसीदास
नेपाली खपड़ा, वाराणसी

४. पुस्तक-भण्डार, लहेरियासराय
दरभंगा